रसागमपरिज्ञानविहीनो भिषगल्पधीः ।
निरन्तरं विशेषेण रसपुष्पं न योजयेत् ॥

चन्दनादि वटिका ।

रक्तचन्दनमथोषणं सिता कुंकुमं रससुमं लवङ्गकम् ।
तोलकैककमितमेव वै पृथक् त्वाददीत रसतन्त्रकोविद्ः ॥
रक्तिकैकमिता वटी कृता प्रत्यहं तु नवनीतयोजिता ।
चन्दनादिवटिकेयमुत्तमा हन्ति दुर्जयफिरङ्गजां व्यथाम् ॥
( रस तरंगिणी पृ० ४० से ४२ )

रसकर्पूर का नव्य निर्माण प्रकार ।

पलसंमितं प्रयात्नाद् विमलीकृतं रसेशम् ।
सपलार्द्धकं पलैकं विमलञ्च गन्धकाम्लम् ॥
चषकोपमे विशुद्धे निदधीत काचपात्रे ।
विनिधाय काचपात्रं त्वयसस्त्रिपादिकायाम् ॥
ज्वलिते सुराप्रदीपे संशोषयेज्जलांशम् ।
अथ शोषिते तु चूर्णे त्ववतार्य वै प्रदीपात् ॥
समभागिकं तु दद्याल्लवणं तु सैन्धवाख्यम् ।
परिमेल्य चूर्णमेतन्निदधीत काचकुप्याम् ॥
युगसङ्ख्यकैस्तु यामैः सिकताख्ययन्त्रसंस्थम् ।
विपचेदतिप्रयत्नात् रसतन्त्रकर्मविज्ञः ॥
अवबुध्य काचकूपीं स्वत एव शीतलाङ्गीम् ।
घनसारनामधेयं रसमाहरेद्रसज्ञः ॥

अत्र रहस्यम्

जलीय बाष्पे निर्याते पिधानेन पिधापयेत् ।
कूपीकण्ठस्थितां स्वल्पां सिकताञ्चापसारयेत् ॥

रसकर्पूर के गुण

रसकर्पूरकः ख्यातो बहुभूतविषापहः ।
त्वग्रक्तदोषशमनो ग्राही रुचिविवर्द्धनः ॥
अतीसारप्रशमनो विशेषात्कृमिनाशनः ।
प्रवाहिकाहरः कामं मात्राधिक्ये विषक्रियः ॥
स्फोटं कण्डूमपि च चिरजां मण्डलादींश्च कुष्ठान् ।
सर्वोत्थं वा सहजमपि वा स्पर्शजं वा फिरङ्गम् ॥
शीघ्रं नानाव्रणगणभवां हन्ति पीडां महोग्राम् ।
कर्पूराख्यो जठरदहनोद्दीपनोऽयं रसेशः ॥
शीतले षोडशगुणे सलिले विनिपातितः ।
सर्वथा द्रवतां याति रसःकर्पूरकाभिधः ॥

रसकर्पूर की मात्रा का निरूपण

आरभ्य रक्तिकायास्तु चतुः षष्ट्यंशतो भिषक् ।
द्वात्रिंशद्भागपर्य्यन्तं मात्रामस्य प्रयोजयेत् ॥

रसकर्पूर के आभ्यन्तर प्रयोग के लिए मात्रानिर्माणप्रकार

चूलिकालवणं शुद्धं गुञ्जापञ्चकसंमितम् ।
समञ्च रसकर्पूरं षष्टितोलकसंमिते ॥
जले विनिक्षिपेत्प्राज्ञो मात्रामस्य प्रकल्पयेत् ।
बिन्दुत्रिंशकतश्चादौ षष्टिबिन्दुमितां पराम् ॥

रसकर्पूर के आभ्यन्तर प्रयोग के लिए चूर्णरूप से मात्रानिर्माणप्रकार

श्लक्ष्णं दारुसिताचूर्णं पञ्चमाषकसंमितम् ।
गुञ्जैकं रसकर्पूरं क्षिपेन्निम्बवम्लमर्दितम् ॥

रक्तिकैकमितं चूर्णं मात्रायां विनियोजयेत् ।
रक्तित्रयमिता पूर्णमात्रास्य परिकीर्तिता ॥

रसकर्पूर का आमयिक प्रयोग

रसः कर्पूरसंज्ञोऽयं मात्रयापरिशीलितः ।
प्राभातिकीं भुक्तमात्रोत्थिताञ्चातिसृतिं हरेत् ॥
कर्पूराख्यो रसो युक्तः सदाह चिरकालजम् ।
द्रवपीतमलोपेतमतीसारं विनाशयेत् ॥
शीलितो रसकर्पूरो मात्रया सुचिरोत्थिताम् ॥
सरक्तां सकफाञ्चैव विनिहन्ति प्रवाहिकाम् ॥

( रसतरंगिणी पृष्ठ ४४ और ४५ )

रसकर्पूर गुटिका

कुंकुमं मरिचं रक्तचन्दनं च लवङ्गकम् ।
जातिपत्री पृथक् सर्वं माषकप्रमितं हरेत् ॥
विशुद्धं रसकर्पूरं रक्तिकैकमितं क्षिपेत् ।
संमर्द्य निम्बुनीरेण कुर्याद् गुञ्जान्मितां वटीम् ॥
रसकर्पूरगुटिका नामतः परिकीर्तिता ।
शीलिता नवनीतेन फिरङ्गं हन्त्यसंशयम् ॥

( रसतरङ्गिणी पृ० ४६ )

मुग्धरस का निर्माणप्रकार

युगतोलकप्रमाणं विमलीकृतं रसेशम् ।
द्विगुणां खटीञ्च शुद्धां निदधीत खल्वमध्ये ॥
परिपेषयेत्तु तावद् विधिनैतदीयचूर्णम् ।
अवलोक्यते न यावत्खलु चन्द्रिकाविहीनम् ॥
हतचन्द्रिकं तु चूर्णं ह्यवबुध्य योजयेद्वै ।
विबुधैः स्मृतो रसोऽयं खलु मुग्ध नामधेयः ॥

मुग्धरस के गुण

उदरामयनुत् वमिहृन्नियतं सहजोत्थफिरङ्गकुरङ्गहरिः ।
शिशुरोगहरस्तु विशेषतया विबुधैरुदितः खलु मुग्धरसः ॥

मुग्धरस का मात्रानिरूपण

गुञ्जार्धतः समारभ्य सार्धगुञ्जद्वयोन्मिता ।
पूर्णमात्रा मता मुग्धरसस्य तरुणोचिता ॥
गुञ्जाष्टमांशतश्चास्य गुञ्जापादांशसंमिता ।
पूर्णमात्रा मता विज्ञैर्वार्षिकस्यार्भकस्य तु ॥

मुग्धरस के आमयिक प्रयोग

गुञ्जैकसंमितो मुग्धरसस्तु सलिलान्वितः ।
मासमेकं द्वयं वापि यत्नतः परिशीलितः ॥
गर्भिणीनां चिरोद्भूतां नवजातामथापिवा ।
फिरङ्गजनितां बाधां नाशयत्यविलम्बितम् ॥
गुञ्जापादोन्मितो मुग्धरसो नीरेण शीलितः ।
शिशूनां विनिहन्त्याशु फिरङ्गं सहजोत्थितम् ॥
रक्तिकांघ्रिमितो मुग्धरसो वारा नियोजितः ।
विनिहन्त्याशु बालानामतीसारं सुनिश्चितम् ॥
विज्ञाय रोगोपशमं प्राणाचार्यो भिषग्वरः ।
न योजयेन्मुग्धरसं रससिन्दूरवद् भृषम् ॥

( रसतरङ्गिणी पृ० ३८ और ३९ )

कज्जलिका का निर्माण और उसका स्वरूप

अर्द्धसमानद्विगुणमिताद्या गन्धकचूर्णात् पारदकस्य ।
मर्दनजन्या मसृणकाया कज्जलरूपा कज्जलिका सा ॥

कज्जलिका का प्रयोगों में विधान ।

योगेषु यत्र निर्दिष्टौ समौ गन्धकपारदौ ॥
तन्मानां कज्जलीं तत्र योजयेद्भिषजां वरः ।
उक्ते पारदमात्रे तु प्रयोगेषु सुनिश्चितम् ॥
योजयेद्रससिन्दूरं रसतन्त्रविशारदः ।
गन्धः स्यादधिकः सूतात् यावान् योगेषु मानतः ॥
गन्धं तावन्तमेवेह विधानज्ञो विनिक्षिपेत् ।
रसोऽधिको भवेद्यत्र गन्धकस्य प्रमाणतः ।
आदावेव विदध्यात्तु तन्मानात्तत्र कज्जलीम् ।

कज्जलिका के गुण ।

सहपानानुपानानां वैशिष्ट्यादिह कज्जली ।
सर्वामयहरा वृष्या मता दोषत्रयापहा ॥

कज्जलिका के आमयिक प्रयोग

कज्जली समसुगन्धनिर्मिता द्राविडीमरिचचन्द्रतोयदैः ।
देवपुष्पबदरास्थिसंयुतैश्चूर्णितैश्च मधुना वमिं हरेत् ॥
कज्जली द्विगुणगन्धनिर्मिता चन्द्रबालकमरीचशैलजैः ।
चूर्णितैस्तु ससितैश्च भक्षिता दारुणामपि तृषां वमिं हरेत् ॥
वरुणादिकषायेण कज्जली परिशीलिता ।
बाह्यान्तर्विद्रधिं घोरां विनिवारयति द्रुतम् ॥
द्विभागगन्धककृता कज्जली खलु भक्षिता ।
कारवेल्लीदलरसैर्विसर्पं दारुणं हरेत् ॥
द्विगुणितबलियोगा कज्जली श्लक्ष्णचूर्णा,
सततमिह हि लीढा शिग्रजत्वग्रसेन ।

मधुजमधुसमेता विद्रधिं हन्ति बाह्यां।
त्वपनयति तथान्तर्विद्रधिञ्चातिघोराम् ॥

कज्जली द्विगुणगन्ध निर्मिता यष्टिकावृषकणाभयाक्षकैः।
बर्बरीस्वरसभाविता भृशं श्वासकासतमकामयापहा ॥

समानगन्धनिर्मिता सनिम्बुकाम्लनागरा।
कणान्विता तु कज्जली हरेदजीर्णमुद्धतम् ॥

एलाहिफेनकर्पूरजातीफललवङ्गकैः।
समैः सुचूर्णिता ख्याता कज्जली स्वप्नमेहनुत् ॥

शिंशपासारतैलेन नवनीतेन वानिशम्।
लिप्ता कज्जलिका शीघ्रं जीर्णं चर्मदलं हरेत् ॥

द्विभागधूर्तपत्राढ्या कज्जली मन्थजान्विता।
चित्रकद्रवसंपिष्टा कण्डूपामादिकं हरेत् ॥

कज्जली सैन्धवोपेता रविदुग्धेन पेषिता।
गण्डेषु लेपनादेव नाशयेद् गण्डमालिकाम् ॥

वराकौशिकचूर्णेन समुपेता तु कज्जली।
वातारितैलसंयुक्ता सर्वामयविनाशिनी ॥

कज्जली द्विगुणगन्धनिर्मिता गव्यमन्थजयुता निषेविता।
नाशयेत्तु ह्युपदंशमुद्धतं पथ्यमत्र लवणोज्झितं मतम् ॥

समगन्धक योगेन कृता कज्जलिका खलु।
लेपनान्नवनीतेन गजचर्महरा मता।

कज्जली सितयोपेता धात्रीस्वरससंयुता।
शीलिता नाशयत्याशु सर्वानेव मदात्ययान् ॥

धत्तूरबीजस्वरसपेषिता खलु कज्जली।
सव्योषा नस्ययोगेन सन्निपातं निपातयेत् ॥

### रसपर्पटिका का निर्माणप्रकार

सूतं हिंगुलसम्भवं हृतमलं मोटोरुबूकार्द्रकैः
दैत्येन्द्रं कचरञ्जनोद्भवजलैः प्राक् सप्तधा भावितम् ।
अग्नौ कोलककोकिलोज्ज्वलशिखे सम्यग्विलाप्यद्रुतं ।
भृंगोत्थे सलिले निषिच्य विमलं तुल्यं ततः पेषयेत् ॥
युक्त्या कज्जलिकां विधाय विबुधस्तां लोहदर्व्यां क्षिपेत् ।
निर्दिष्टैः खलु कोकिलैश्च दहनं प्रज्वाल्य दर्वीं न्यसेत् ॥
सूतं पङ्कसमं विलाप्य रुचिरं पाकक्रिया कोविदः ।
शीघ्रं गोमयसंस्थिते तु कदलीपत्रे ततो निक्षिपेत् ॥
निक्षिप्तमात्रं कदलीपलाशैराच्छादयेद्वै सुचिरं रसज्ञः ।
यस्मादियं पर्पटतुल्यरूपा तस्मान्मता पर्पटिकाभिधेया ॥

### पर्पटिकापाकस्य त्रैविध्यम्

मृदुर्मध्यः खरश्चेति पाकोऽत्र त्रिविधः स्मृतः ।
आद्यौ प्रयोजयेद्वैद्यः खरन्तु विषवत्त्यजेत् ॥

### त्रिविधपाकानां स्वरूपाणि

मृदुपाके न भङ्गः स्यात्तत्सारल्यश्च मध्यमे ।
द्वयोः सचन्द्रिकं कार्ष्ण्यं खरे चूर्णश्च लोहितम् ॥

### पर्पटिका के गुण

ग्रहणीगजमर्दनदक्षतरा क्षयकासजलोदरगुल्महरा ।
अतिसारमतिभ्रमदाहहरा ज्वरशोथहरा रसपर्पटिका ॥
अर्शोरोगं हरति सुतरां कामलां शूलकोपं ।
पाण्डुव्याधिं श्वयथुसहितं भस्मकञ्चातिभीष्मम् ॥

कुष्ठान्यष्टादश भृषमथोत्सेधकं सर्व रूपं ।
प्लीहानञ्च प्रविततरुजं त्वामवातानशेषान् ॥
अम्लपित्तशमनी हरणीया वृद्धदोषदमनी रमणीया ।
कामशुक्रजननी मदनीया पर्पटी क न भवेत्कमनीया ।

पर्पटी की मात्रा

गुञ्जाद्वितयमेवादौ मात्रामस्य प्रकल्पयेत् ।
क्रमवृद्ध्या च वितरेद् गुञ्जादशकमन्ततः ।

रसपर्पटिका के आमयिक प्रयोग

नाकुलीबीजरजसा गुञ्जाष्टकमिताशिता ।
रसपर्पटिका साज्यमुन्मादमिह नाशयेत् ॥
ब्राह्मीरससमायुक्ता गुञ्जाष्टकमिताशिता ।
रसपर्पटिका काममपस्मारं निवारयेत् ॥
रामठेनार्धगुञ्जेन सगुञ्जाष्टकजीरका ।
रसपर्पटिका भुक्ता ग्रहणीं हन्ति दारुणाम् ॥
व्योषनिम्बुदलोपेता भक्षिता रसपर्पटी ।
सप्ताहद्वितयेनैव त्वपस्मारं विनाशयेत् ॥
वर्धमानकबीजोत्थतैलेन परिशीलिता ।
शूलं, गुग्गुलुना पाण्डुशोफं हन्यात्तु पर्पटी ॥
धूर्तबीजसमायुक्ता रसपर्पटिकाशिता ।
गुञ्जापञ्चकमात्रन्तु हन्त्युन्मादं विशेषतः ॥
गोमूत्रेण समायुक्ता रसपर्पटिकाशिता ।
मासमात्रप्रयोगेण नाशयेद्गुदजामयम् ॥
निम्बपञ्चकभल्लातबाकुचीभृङ्गसंयुता ।
निहन्ति सर्वकुष्ठानि रसपर्पटिकाशिता ॥

दशमूलकषायेण शीलिता रसपर्पटी ।
विनाशयेद्विशेषेण दारुणं वातिकं ज्वरम् ॥
त्र्यूषणक्षोदसंयुक्ता रसपर्पटिकाशिता ।
विनिहन्त्यचिरादेव कासं खलु कफोत्थितम् ॥

पर्पटिकाभक्षणसमनन्तरं जलपान निषेधः

रसबलिपर्पटिकाया भक्षणसमकालमेव दोषज्ञैः ॥
नादेयं वा कौपं पानीयं नैव पानीयम् ॥

पर्पटिकायाः पथ्यानि

काकाह्वा च पटोलकं सुविशदं पूगीफलञ्चार्द्रकं,
वास्तूकं कदलीप्रसूनममलं कूष्माण्ड वातिङ्गनम् ।
सूक्ष्माश्चाथ पुरातनाः कृमिगणैर्हीनास्तथाशालयः,
पानं गोपयसः सशर्करमलं पथ्यं बुधैः कीर्तितम् ॥

प्रकारान्तरेण पथ्यानि

पुराणाः शालयः शाके वृन्ताकं वा पटोलकम् ।
गवां दुग्धन्तु सततं पथ्यमेतच्चतुष्टयम् ॥
प्रथमायामवस्थायां दुग्धं सात्म्यं न चेद्भवेत् ।
अतिसारप्रवृत्तिः स्यात्तदा तन्नैव योजयेत् ॥
छागतित्तिरिकादीनां रसं तत्र नियोजयेत् ।
अतीसारनिरोधे तु दुग्धमेव प्रदापयेत् ॥
शोथे विशेषतो हेयं पानीयं लवणन्तथा ।
तृषायां वितरेदल्पं नारिकेलोदकं भिषक् ॥
उष्णप्रधानदेशेतु रोगिमङ्गलकाम्यया ।
सशोथेऽपि भिषङ् नीरं जातु नैव विवर्जयेत् ॥

रसपर्पटिकाया अपथ्यानि

नाम्लं स्नानं शिशिरसलिलैर्नापि वातादिसेवां ।
कोपं चिन्तामहितमतुलं नैव सेवेत चोष्णाम् ॥
तिक्तं निम्बादिकमिह गुडानूपमांसादिकञ्च ।
स्त्रीणां सम्भाषणमपि बुधैर्नैव कार्यं कदाचित् ॥
( रसतरङ्गिणी पृ० ४८-५३ )

रससिन्दूरस्य निर्माणप्रकार:

तोलकाष्टकमितं रसेश्वरं तन्मितञ्च विमलं बलिं हरेत् ।
खल्वके खलु विमर्द्य कज्जलीं भावयेदथ वटांकुराम्बुभिः ॥
मसीपात्रसमाकारां सुकृष्णां काचकूपिकाम् ।
सतूलकुट्टितमृदा लेपयेत् खलु यत्नतः ॥

स्थापयेत्कज्जलीं काचकुप्यां ततो यत्नतः पाचयेद्वालुकायन्त्रगाम् ।
अग्निवृद्धिक्रमैर्जीर्णगन्धे रसे रोधयेद्युक्तितः काचकूपीमुखम् ॥
वालुकायन्त्रके काचकूपीमुखात् रोचनासन्निभो नैति धूमो यदा ।
सूतपाकक्रियाज्ञानदक्षैर्बुधैर्वेदितव्यस्तदा जीर्णगन्धो रसः ॥
निवेश्य कुप्यां खटिकापिधानं, जलेन सम्पेषितया प्रकामम् ।
प्रलेपयेद्वै गुडचूर्णपिष्ट्या, ततः पचेद्यामयुगं रसज्ञः ॥
अवबुध्य तदंगशीततां खलु बालारुणसूर्यसन्निभम् ॥
गलदेशविलग्नमुज्ज्वलं रससिन्दूरमिहाहरेद्बुधः ॥

अर्द्धगन्धकजीर्ण रससिन्दूरम्

तोलकाष्टकमितो रसेश्वरः कर्षकद्वयमितश्च गन्धकः ।
नव्यसार इह कर्षसंमितः पेषयेदथ च लुङ्गवारिभिः ॥

कूपिकागतमथ प्रबुद्धधीः सम्पचेत् सिकतयन्त्रके भिषक् ।
शास्त्रवित्खलु विभिद्य कूपिकां हिंगुलाभमिह सूतमाहरेत् ॥

समानगन्धकजीर्णरससिन्दूरम्

पामारिं खलु निर्मलं पलमितं तत्तुल्यमानं रसम् ।
तत्पादप्रमितं नृसारममलं दत्वाऽथ संपेषयेत् ॥
कूपीमध्यगतं विधाय सिकतायन्त्रे पचेद्युक्तितः ।
राजीवोपममूर्ध्वभागगरसं कूपीं विभिद्याहरेत् ॥

द्विगुणगन्धकजीर्ण रससिन्दूरम्

पामारिं विमलं पलद्वयमितं सूतं पलेकोन्मितं ।
सम्मर्द्याथ विभावयेद्धि कुसुमैः रक्ताभकार्पासजैः ॥
कूपीमध्यगतं पचेच्च सिकतायन्त्रे त्वहोरात्रकम् ।
राजीवोपममूर्ध्वभागनिचितं सिन्दूरकञ्चाहरेत् ॥

त्रिगुणादिगन्धकजीर्णस्य रससिंदूरस्य विधानम्

अनेनैव विधानेन गन्धकं वर्द्धयन् क्रमात् ।
रसकर्मविशेषज्ञो रससिन्दूरमुद्धरेत् ॥
जीर्णगन्धे रसे जाते क्रमागतद्दिनक्रमैः ।
यामद्वयं ततः प्राज्ञै रसपाको विधीयते ॥

षड्गुणगन्धकजीर्ण रससिन्दूरम्

पामारिर्विमलोऽङ्ग संख्यकपलः सूतस्य चैकं पलं
सम्पेष्याथ विभावयेद्बुधवरो यामं कुमारीरसः
कूपीमध्यगतं विधाय सिकतायन्त्रे ततः सम्पचेत्
गाढं वासरसप्तकञ्च विधिना सिन्दूरकञ्चाहरेत् ॥

रससिन्दूरस्य गुणाः

प्रमेहकरिकेशरी प्रबलशूलकालानलो
भगन्दरहरः परं खलु महाज्वरेभांकुशः ।
समस्तगदतस्करः सकलशोषसंशोषको
रसोऽतुल विलासदो विजयते हि सिन्दूरकः ॥
नियमयति रसेशः पञ्चवातान्नितान्तं
प्रसरति धमनीनां स्वक्रिया वातसाम्ये ।
दृढ़यति भृशमादौ जालकं नाडिकानां
रमयति च ततोऽसौ मानसं सेवकानाम् ॥
वहिर्गमनशीला ये स्वेदविण्मूत्रमारुताः ।
निरायासं विनिर्यान्ति रसस्यास्य निषेवणात् ॥
पित्तं निःसारयत्येष न रेचयति कर्हिचित् ।
न च पित्ताशयं कोष्ठं विक्षोभयति भक्षितः ॥
स्फीततां दन्तवेष्टानां मुखपाकं क्षतादिकम् ।
लालास्रावं प्रदाहञ्च न सूते चिरसेवितः ॥
विकारानीदृशानन्यान् दारुणान् पारदोत्थितान् ।
न जातु प्रकरोत्येष रसः सिन्दूर संज्ञकः ॥

रससिन्दूर की मात्रा

एकहायनदेशीयं बालकं वीक्ष्य रोगिणम् ।
गुञ्जायाः षोडशो भागस्तत्र मात्रा प्रकल्प्यते ॥
तथा द्विवर्षदेशीये सप्तमोभाग इष्यते ।
रसहायनदेशीये तृतीयं भागमाहरेत् ॥
द्वादशाब्दकदेशीये गुञ्जार्धं परिकल्पयेत् ।
गुञ्जामात्रमिता चास्य पूर्णमात्रा प्रशस्यते ॥
( रसतरङ्गिणी पृ० ५३-६० )

मकरध्वज का निर्माण प्रकार

स्वर्णं तोलकसंमितं मृदुदलं युक्त्या विशुद्धाकृतं
स्वर्णादिष्टगुणोन्मितं रसवरं जीर्णाच्छसौगन्धिकम् ।
संस्कारैर्बहुभिर्विशोधितमथो सम्मेल्य सम्पेषयेत्
गन्धं षोडशतोलकं सुविमलं कुर्यात्ततः कज्जलीम् ॥
शोणैः कार्पासपुष्पैरथ मृदुविशदांकोटमूलत्वचाद्भिः
कन्यानीरैश्च घस्रं रसविधिचतुरो भावयेदामयज्ञः ।
सम्यक् पिष्टं सुशुष्कं त्वपि च रसवरं काचकुप्यां निदध्यात्
बिल्वादीनाञ्च काष्ठैः सलिलविरहितैस्तापयेच्चाथविद्वान् ॥
पूर्वं यामद्वयं प्राज्ञः पचेन्मृद्वग्निना रसम् ।
मध्यमानलयोगाच्च ततो यामद्वयं पचेत् ॥
प्रखरेणानलेनाथ पचेद्याम द्वयं भिषक् ।
अवशिष्टद्वियामञ्च पुनर्मृद्वग्निना पचेत् ॥
यन्त्रे सिकतसंज्ञे च स्वाङ्गशीतमथोद्धरेत् ।
काचकूपीं विभिद्याथ सहकारसमप्रभम् ॥
भङ्गे रक्तप्रतीकाशं पिष्टे रक्तोत्पलोपमम् ।
सौवर्णं मूर्च्छितं सूतं गृह्णीयाद्भिषजां वरः ॥
नानेन जायते यस्मान्मकरध्वज सन्निभः ।
रसज्ञैः ख्यापितस्तस्मान्नाम्नायं मकरध्वजः ॥

श्री सिद्धमकरध्वजः

पूर्वोक्त निजमानाच्च कनकं चेच्चतुर्गुणम् ।
निर्दिष्ट मानप्रमितौ भवतो रसगन्धकौ ॥
पूर्ववद्भावयित्वापि पचेत्सिकतयन्त्रके ।
एवन्तु षड्गुणं गन्धं जारयेत्क्रमशो भिषक् ॥

समर्पितो यतश्चायं सिद्धेभ्यः शूल पाणिना ।
ख्यातस्ततोऽयं जगति श्रीसिद्धमकरध्वजः ॥

अथास्य गुणाः

क्षयंक्षयकरः परं प्रबलकासकालानलः ।
प्रमेहकुलकण्डनः प्रविततान्त्रशोषान्तकः ॥
समस्तगदभञ्जनः प्रमदकामिनीरञ्जनः ।
सदैव मकरध्वजो विजयते रसाधीश्वरः ॥

( रसतरङ्गिणी पृ० ६०-६१ )

षड्गुण बलिजारित रसः

क्षुद्रभाण्डे रसं कृत्वा बालुकायन्त्र मध्यगम् ।
षड्गुणं गन्धकं तत्र क्षिपेदल्पाल्पकं शनैः ॥
तैलरूपो यदागन्धस्ततोऽवतारयेद्द्रुतम् ।
स्वांगशीते दृढे गन्धे स्फोटयित्वा रसं नयेत् ॥
सर्वं रोगेषु दातव्यो रसो व्याधिनिसूदनः ।

( रसेन्द्रसारसंग्रह )

बृहच्चन्द्रोदय मकरध्वज

पलमृदुःस्वर्णदलं रसेन्द्रात् पलाष्टकं षोडशगन्धकस्य ।
शोणैः सुकार्पासभवैः प्रसूनैः सर्वं विमर्द्याथ कुमारिकाद्भिः ॥
तत्काच कुम्भे निहितं सुगाढे मृत्कर्पटीभिर्दिवसत्रयञ्च ।
पचेत् क्रमाग्नोसिकताख्ययंत्रे ततो रजः पल्लवरागरम्यम् ॥
निगृह्य चैतस्य पलं पलानि चत्वारि कर्पूररजस्तथैव ।
जातीफलं सोषणमिन्द्रपुष्पं कस्तूरिकाया इह शाणमेकम् ॥
चन्द्रोदयोऽयंकथितोऽस्यमाषो भुक्तोऽहिवल्लीदलमध्यवर्ती ।
घृतं घनीभूतमतीवदुग्धंमदूनि, मांसानि समस्तकानि ॥

माषान्नपिष्टानि भवन्ति पथ्यान्यानन्ददायीन्यपराणिचात्र ।
बलीपलितनाशनस्तनुभृतां वयःस्तम्भनः
समस्तगदखण्डनः प्रचुररोगपञ्चाननः ॥
गृहेऽपिगृहभूपतिर्भवति यस्य चन्द्रोदयः ।
स पञ्चशरदर्पितो मृगदृशां भवेद्वल्लभः ॥

( भैषज्यरत्नावली पृष्ठ ४१४ )

१ स्वर्णसिन्दूरम्

पलं रसेन्द्रस्य च गन्धकस्य हेम्नोऽपि कर्षं परिगृह्यसम्यक्
वटप्ररोहस्य रसेनयामं यामं विमर्द्याथ कुमारिकायाः ।
तत्काचकुप्यां निहितं प्रयत्नात्पचेद्विधिज्ञः सिकताख्ययन्त्रे
ततोरजश्चोर्ध्वगतं सुरम्यं प्रगृह्ययत्नादरुणप्रभं यत् ॥
तद्योजयेत् सर्वगदेषुवीक्ष्य धातुं बलं वह्निमथो वयश्च ।
रसायनं वृष्यतरञ्च बल्यं मेधाग्निकान्तिस्मरवर्द्धनञ्च ॥

( भैषज्यरत्नावली )

२ स्वर्णसिन्दूरम् ( मकरध्वजोरसः )

स्वर्णादष्ट गुणं सूतं मर्दयेत् त्रिकगन्धकम् ।
रक्तकार्पासकुसुमैः कुमार्य्यद्भिर्विमर्दयेत् ॥
शुष्कं काचघटीं रुध्वा बालुका यन्त्रगं हठात् ।
भस्म कुर्य्याद्रसेन्द्रस्य नवार्क किरणोपमम् ॥
भागोऽस्य भागाश्चत्वारः कर्पूरस्यसुशोभनाः ।
लवङ्गं मरिचं जातीफलं कर्पूर मात्रया ॥
मेलयेन्मृगनाभिश्च गद्यानकमितं ततः ।
श्लक्ष्णा पिष्टो रसोनाम जायते मकरध्वजः ।

बल्लं बल्लद्वयं वाथ ताम्बूलीदल संयुतम् ॥
भक्षयेन्मधुरं स्निग्धं मृदुमांसमवातलम् ।
शृतशीतं सिता युक्तं दुग्धं गोभवमाज्यकम् ॥
मण्वाद्यं पिष्टमपरं मद्यानि विविधानिच ।
करोत्यग्निबलं पुंसां वलीपलित नाशनः ॥
मेधायुः कान्तिजननः कामोद्दीपनकृन्महान् ।
अभ्यासात्साधकः स्त्रीणां शतं जयति नित्यशः ॥
रतिकाले रतान्ते च पुनः सेव्योरसायनः ।
कृत्रिमं स्थावरं विषं जङ्गमं विषवारि च ॥
न विकाराय भवति साधकानाञ्च वत्सरात् ।
मृत्युञ्जयो यथाभ्यासान्मृत्युञ्जयति देहिनाम् ॥
तथाऽयं साधकेन्द्रस्य जरामरणनाशनः ।

( भैषज्यरत्नावली पृष्ठ ६४८ )

२ मकरध्वजोरसः

पलञ्चैकं स्वर्णदलं रसेन्द्रञ्च पलाष्टकम् ।
रसस्य द्विगुणं गन्धं तेनैव कज्जली कृतम् ॥
कुमारिकारसैर्भाव्यं काचयन्त्रेनिधापयेत् ।
वालुयन्त्रे च संस्थाप्य क्रमाद्दिनत्रयं पचेत् ॥
स्वाङ्गशीतं समादाय पुष्पारुणरजः समम् ।
यवमात्रं प्रदातव्यमहिवल्लीदलेनच ॥
एतदभ्यासतश्चैव जरामरणनाशनम् ।
अनुपान विशेषेण करोति विविधान् गुणान् ॥
ज्वरं त्रिदोषजं घोरं मन्दाग्नित्वमरोचकम् ।
अन्यांश्च विविधान् रोगान्नाशयेन्नात्र संशयः ॥

( भैषज्य रत्नावली पृष्ठ ८८ )

सिद्धसूतः

मुक्ताफलं शुद्धसूतं सुवर्णं रूप्यमेव च ।
यवक्षारश्च तत्सर्वं तोलकैकं प्रकल्पयेत् ॥
रक्तोत्पलपत्रतोयैर्मर्दयेत् पुत्तली कृतम् ।
मर्दयेच्च पुनर्दत्त्वा गन्धकं तदनन्तरम् ॥
क्षिप्त्वा काचघटी मध्ये सन्निरुध्य त्रियामकम् ।
सिकताख्ये पचेच्छीने सिद्धसूतंतु भक्षयेत् ॥
पञ्चरक्तिप्रमाणेन मुशलीशर्करान्वितम् ।
शुक्रवृद्धिं करोत्येष ध्वजभङ्गञ्च नाशयेत् ।
दुर्बलं वपुरत्यर्थं बलयुक्तं करोत्यसौ ॥
मुद्गगर्भघृतं क्षीरं शालयः स्निग्धमामिषम् ।
पारावतस्य मांसञ्च तित्तिरञ्च सदा हितः ॥

( भैषज्यरत्नावली पृष्ठ ४१५ )

ताल चन्द्रोदयः

कुष्माण्डसंस्वेदन जातशुद्धि तालं सुपत्रं परिकुट्यवस्त्रे ।
चागाल्य मर्देत्समपारदेन बुभुक्षुणा जीर्णसुवर्णकेन ॥
द्विवृत्तगन्धेन पलङ्कषायां शुद्धेनसर्पिः पयसोरुतापि ।
दिनत्रयं काचमयीं भरेत शीशीं चतुर्थांशतले मसिताम् ॥
प्रारंभतीव्रं कुरु हव्यबाहं तालादिभस्मार्थं विधातृ कोष्ठ्याम् ।
चन्द्रोदयिन्यां विनिधायत्यन्त्रं सर्वार्थकर्यामुत वालुकाख्यम्
दि कमात्रेणवनेद् विशुद्धश्चन्द्रोदयो नाम च ताल पूर्वः ।
कुष्ठादिरोगेष्वतुलप्रभावः स्वास्थ्य प्रचारक्रम सत्स्वभावः ॥

( रसायन सार पृष्ठ २४६ )

शिला चन्द्रोदयः

मनःशिलामार्द्ररसैर्विमर्द्येदेकाधिकं विंशति कृत्वआद्यम् ।
संशोष्य संशोष्य तया समेशं तत्तुल्यगन्धेनमसिं च कुर्यात्
भृत्वा च कूप्यामथ वालुकाख्ये यन्त्रे पचेद्घस्र चतुष्टयं तत्
काष्ठाग्निना शीतमथावतार्य्य गले विलग्नंरसमाददीत ॥
चन्द्रोदयश्चैष मनःशिलादि कुष्ठादि रोगापनयायदिष्टः ।
इष्टश्च गुञ्जाद्वयमात्रमात्रो हेमन्तकाले पुरुषाय यूने ॥

( रसायन सार पृष्ठ २५६ )

मल्लचन्द्रोदयः ।

नैम्बूकनीरेण दिनत्रयन्तु श्वेतादि रूपांश्चतुरोपिमल्लान् ।
यथोत्तरं तूग्रबलान्मिथस्तान्समांश सूतेन विमर्दयेत ॥
ताभ्यां समानेन सुगन्धकेन कृत्वा मसिं कूपिकया पचेत ।
सर्वार्थ कर्य्याखलु कोष्ठिकायां यामत्रये शीतलमुद्धरेत ॥
मल्लादि चन्द्रोदयमामनन्ति सर्वौषधेभ्योपि प्रधान वीर्यम् ।
विसूचिका सन्निपतत् त्रिदोषान् व्याधीनपाकर्तुमनन्यशस्त्रम् ॥

( रसायन सार पृष्ठ २६३ )

विषचन्द्रोदयः ।

बुभुक्षुसूतो विषगन्धकौच समानमानाः कृतकज्जलीकाः ।
सम्मृत्पटायामपि कूपिकायां भृताधृता यन्त्र गताश्चकोष्ठ्यां ॥
चेत्प्रस्तरेङ्गाल कृशानुपक्का यामद्वयेनैव च कर्मसिद्धिः ।
बर्बूरकाष्ठाग्नि विपाचितास्तु यथा गुरुत्वं समयः समीक्ष्यः ।
गुञ्जार्द्ध गुञ्जाद्वय मात्रमात्रा विषादि चन्द्रोदय रामवाणः ॥
शीतज्वराणां विषमज्वराणां नवज्वराणां त्रितयज्वराणाम् ॥
प्रभञ्जनव्याधिप्रभञ्जहेतुर्वार्द्धक्य कासारति धूमकेतुः ॥
नानार्तिलङ्घ्यातुररामसेतुर्धार्य्यः स्वपार्श्वेभिषजाऽर्तिजेतुः ॥

( रसायन सार पृष्ठ २६६ )

सत्वचन्द्रोदयः।

मनःशिलाऽलाऽमृत मल्लकानां जम्बीर निम्बवम्बुसुभावितानाम्
पृथग्द्वयं वा त्रयमेव वापि चतुष्टयं वोत्थिति यन्त्रकेण।
उत्पात्य सत्वं ननुसंगृहाण खड्वाङ्क यन्त्रोर्ध्वतले विलग्नम्॥
समं समं तत्परि मेल्य सर्वं तत्तुल्यसूतं क्षुधित विमर्द्दत्॥
समस्तमानं द्विगुणं च गन्धं जैपाल भल्लातकतैलशुद्धम्।
मसिं विधायाम्लकवेतसाम्बुसंमर्दितो पञ्चदिनानि सम्यक्।
संमर्द्य संमर्द्य कृतावशोषां पिधानयन्त्रे च निधाय धीमान्॥
क्रमेण वन्हौ मृदुमध्यतीव्रे निरुद्धधूमे परिपाचयेत।
यन्त्रस्यसन्धौ प्रददीत मुद्रां वज्राविधानां दश मृत्पटांश्च॥
दिनद्वयंवन्हिविपाकयोगेऽतीते च शीतेस्वयमेव यन्त्रे।
उद्घाट्य मुद्रां रसमाहरेत ताम्रस्यभस्मापि पृथक् क्रियेत॥
सत्वैश्चतुर्भिः परिनिर्मितोयं चन्द्रोदयापूर्वगुणौघधारी

(रसायन सार पृष्ठ २७१)

पिधान यंत्र विधिः

मृद्धण्डिकावक्त्रमितं च पत्रं शुल्वस्य शुद्धस्य सुवर्तुलंस्यात्।
समोपले श्लक्ष्णतले जलेन घर्षेच्छनैर्हण्डिमुखंकराभ्याम्॥
तथाभवेत्तत्परितोऽग्रभागं रन्ध्रं विना श्लक्ष्णतमस्वरूपम्।
यथापिधाने पिहितेत्रसन्धिः किञ्चिन्न च क्वापि कदापि दृष्टः॥
पिधानकं चापि तथा प्रकुट्टेच्छनैः शनैर्मुद्गरिकाभिघातैः।
समन्ततो नैति यथैतदग्रं वैषम्यतो मेलनकान्तराग्यम्॥
समृत्पटायामनुहण्डिकायां संमूर्च्छ्य द्रव्यं निदधीत भूयः।
मुखं पिधायापि ददीत मुद्रां यन्त्रंविधानं रसरोधकारि॥

(रसायन सार पृष्ठ २७२)

अन्तर्धूमचन्द्रोदय विधिः

आमाति सेटत्रय गौरवाढ्या कूप्यांमसिश्चे दिहचाष्टमांशा ।
आपूर्य्यतांमृत्पटसप्तकायां तीव्रातपे साधु विशोषितायाम् ॥
मुखे खटिग्रासनिरोधितायां मुद्राप्रदानेन दृढ़ीकृतायाम् ।
मृद्वस्त्रलेपेन च लेपितायां तथापि सूत्रैर्दृढवेष्टितायाम् ॥
एतां च यंत्रे ननु बालुकाख्ये धृत्वा च भृत्वा सिकतां गलान्तम् ।
यन्त्रं च तालादि विधातृकोष्ठ्यां निधाय वह्निं मृदुमेव दद्यात् ॥
दिने दिने च क्रमवर्द्धमानं गलेऽतितप्तेत्वतिहीय मानम् ।
तीव्रं पुनर्वा मृदु दीयमानं शशी गलस्पर्श परीक्ष्यमाणाम् ॥
दिनाष्टकं यन्त्रमितिक्रमेण पचेद्गलश्चेदतितीव्रवह्नेः ।
योगेऽपिसंस्पर्श सह्योऽनुभूतोऽन्तर्धूमचन्द्रोदय निश्चयः स्यात् ॥
यतो गलस्थेन रसेन तेन निरुद्ध वर्त्मा हुतभुग्गलान्तम् ।
तप्तुं न शक्नोति न चाऽपि कूपीमनिन्धनः स्फोटयितुंक्षमोऽस्ति
एवं विनिर्णीत रसेन्द्र सिद्धिरुपेक्ष्य तिष्ठेद्रसयन्त्र कोष्ठीम् ।
शीते च यन्त्रे रसमाददीत षड्गुगन्धजारी भवतीति षोढा ॥
चन्द्रोदयोक्ता निखिलाः प्रकाराः सर्वेऽपितेऽत्रापि सुसंभवन्ति ।
अभ्यासवाहुल्येन च किन्तु सिद्धोऽन्तर्धूमचन्द्रोदय कर्मणिस्यात् ॥

( रसायनसार पृष्ठ २७४ )

सहस्रधा चन्द्रोदय विधिः

तारस्य योगं समवाप्य सूतं चन्द्रोदयं तारमुखं विधत्ते ।
ताम्रस्य वङ्गस्य भुजङ्गमस्य व्योम्नोऽपि सत्वस्यतदाख्यमेव ॥
वनस्पतीनामथवाऽपियोगं मुख्यं समालिङ्ग्य तथा बुभुक्षुः ।
सूतश्च सूते ननुगन्धयोगैः सञ्चारितानेक गुणास्तदादिम् ॥
समद्विषट् सप्तशतादिसंख्यैर्गन्धैः स्वमूर्तिर्गुणभेदभिन्नः ।

सहस्रधाऽसौकुरुते रसेन्द्रो माया गुणेनेव सहस्र शीर्षः ॥

( रसायनसार, पृष्ठ २७६ )

पारदमारणम् (१)

धूमसारं रसं तोरीं गन्धकं नवसादरं ।
यामेकं मर्दयेदम्लैर्भागं कृत्वा समांशकम् ॥
काच कुप्यां विनिक्षिप्य तां च मृद्वस्त्रमुद्रया ।
विलिप्य परितोवक्रं मुद्रां दत्वा च शोषयेत् ॥
अधः सच्छिद्र पिठरी मध्ये कूपीं निवेशयेत् ।
पिठरी वालुका पूरैर्भृत्वा चा कूपिकागलम् ॥
निवेश्यचुल्ल्यां तदधः कुर्याद्वह्निं शनैः शनैः ।
तस्मादप्यधिकं किंचित्पावकं ज्वालयेत्क्रमात् ॥
एवं द्वादशभिर्यामैर्म्रियते सूतकोत्तमः ।
स्फोटयेत्स्वाङ्गशीतं च ऊर्ध्वगं गन्धकं त्यजेत् ।
अधःस्थं मृतसूतं च सर्वकर्मसु योजयेत् ॥

अन्यदपि रसमारणम् (२)

अपामार्गस्य बीजानां मूषा युग्मं प्रकल्पयेत् ।
तत्संपुटे न्यसेत्सूतं मलयूदुग्ध मिश्रितम् ॥
द्रोणपुष्पीप्रसूतानि विडङ्गमिरिमेदकः ।
एतच्चूर्णमधोर्ध्वं च दत्वा मुद्रां प्रदीयते ॥
तं गोलं सन्धयेत्सम्यङ्मृन्मूषा संपुटे सुधीः ।
मुद्रां दत्वा शोषयित्वा ततो गजपुटे पचेत् ॥
एवमेकपुटेनैव जायते भस्म सूतकम् ।

अन्यदपि रसमारणम् (३)

काष्ठोदुम्बरिकादुग्धैरसं किंचिद्विमर्दयेत् ।
तद्दुग्धघृष्टहिङ्गोश्च मूषा युग्मं प्रकल्पयेत् ॥

क्षिप्त्वा तत्संपुटे सूतं तत्रमुद्रां प्रकल्पयेत् ।
धृत्वा तं गोलकं प्राज्ञो मृन्मूषा संपुटेऽधिके ॥
पचेन्मृदुपुटेनैव सूतको याति भस्मताम् ।

अपरमपि पारदमारणम् (४)

नागवल्लीरसैर्घृष्टः कर्कोटीकन्दगर्भितः ।
मृण्मूषा संपुटे पक्त्वा सूतो यात्येव भस्मताम् ॥

( शार्ङ्गधर संहिता, पृष्ठ २६३-२६४ )

अन्यच्च (५)

शुद्धसूतसमं गन्धं वटक्षीरैर्विमर्दयेत् ।
पाचयेन्मृत्तिका पात्रे वटकाष्ठैर्विचालयेत् ॥
लघ्वग्निना दिनं पाच्यं भस्मसूतं भवेद्ध्रुवम् ।
द्विगुञ्जं नागपत्रेण पुष्टिमग्निं च वर्धयेत् ॥

( योगचिन्तामणि, पृष्ठ २३१ )

अधस्तल भस्म

सूतश्चतुष्पलमितः समशुद्धगन्धः
स्याद्धूमसार पिचुरेक इदं क्रमेण ।
संमर्दयेद्विमल दाडिम पुष्पतोयै
र्घस्त्रं विमिश्र्य सितसोमल माषकेण ॥
एतन्निधाय सकलं जलयन्त्र मध्ये
संमुद्र्यसन्धिमुदितेन पुरा क्रमेण ।
आपूर्य यंत्रमुदकेन दिनानि चाष्टौ
वह्निं क्रमेण तदधो विदधीत विद्वान् ॥

संपूज्य शम्भु गिरिजां गिरिजातनूजं
दद्यात्कुभेऽहनि रसं वरमेकगुञ्जम् ॥
ताम्बूलिकादल युतं ससितं पयोनु
पीत्वाम्ल माष लवणे रहितं सदन्नम् ।
अद्यात्कियन्त्यपि दिनानि ततो यथेच्छं
भक्ष्यं भजेदथ नरो विगतामयः स्यात् ॥

( वृहद्योगतरङ्गिणी, पृष्ठ २८२ )

१ ऊर्ध्वस्तल भस्म

शुद्ध सूतं द्वयं गन्धं त्रयं स्फटिक सैन्धवम् ।
चतुर्थं सोमलं भागं वत्सनाभं च पंचम् ॥
सूतार्द्धं चैव कर्पूरं सर्वं खल्वे विमर्दयेत् ।
भावनामर्कदुग्धस्य स्नुहीदुग्धस्य वै तथा ॥
यंत्रे च लवणे सूतमूर्द्ध्वस्थाल्या मुखं लिपेत् ।
अग्नि यामाष्टकं दत्वा दद्याच्च जलपातनम् ॥
ऊर्ध्वे स्थाल्यां रसं सिद्धं योजयेत्सर्व कर्मणि ।
भक्षणे देह सिद्धिः स्याद्देव दानव दुर्लभः ॥

( निघंटुरत्नाकर, पारद संहिता पृष्ठ ३१४ )

२ ऊर्ध्वस्तल भस्म

शुद्ध सूत समं गन्धं सोमलं च तदर्धकम् ।
सोमलार्द्धं विषं क्षिप्त्वा हिंगुस्फटिक गैरिकम् ॥
सामुद्रलवणं चैव सर्वतुल्यं विनिक्षिपेत् ।
कांजिकेन पुटं दद्यात् पुटित्वा चैन्द्रवारुणीम् ॥
स्थाल्यामुत्थापनं कृत्वा अग्नि यामाष्टकं ददेत् ।
स्वाङ्गशीतं समुद्धृत्य भस्म सूतोर्द्ध्वं पातनम् ॥

योजयेत्सर्व रोगेषु कुर्याद्बहुतरां क्षुधाम् ।
पुष्टिदो वर्धते कामो युज्यते रक्तिका द्वयम् ॥

( रसराजसुन्दर, पारदसंहिता, पृष्ठ ३१४ )

अभ्रयोगेन रसभस्म

वटक्षीरेण सूताभ्रौ मर्दयेत् प्रहरत्रयम् ।
पाचयेत्तस्यं काष्ठेन भस्मो भवति तद्रसः ॥

( रसरत्नसमुच्चय, पृष्ठ १२३ )

कृष्णाभस्म

धान्याभ्रकं सूततुल्यं मर्दयेन्मारकद्रवैः ।
दिनैकं तेन कल्केन पुटं लिप्त्वाथ वर्तिकाम् ॥
कृत्वैरंडस्य तैलेन विलेप्य च पुनः पुनः ।
प्रज्वाल्यतामधःपात्रे सतैलः पारदः पतेत् ॥
दिनैकं भूधरे पक्त्वा भस्मीभवति नान्यथा ।
योजितो रसयोगेन तत्तद्रोगहरो भवेत् ॥
विशेषान्मेहपाण्डूवर्तिक्षयकासादिकाञ्जयेत् ॥

( टोडरानन्दः, पारदसंहिता पृष्ठ ३१४ )

सुवर्णयोगेन रसभस्म

स्वर्णादष्टगुणं सूतं लोहपात्रे विनिक्षिपेत् ।
गंधकं च कलाभागं स्तोकं स्तोकं विनिक्षिपेत् ॥
विष्णुकान्ता देवदाली द्रवं दद्यात्पुनः पुनः ।
मृदुंच ज्वालयेद्वह्निं यावद्गंधक जारणाम् ॥
सूतभस्म तु जायेत सर्वरोगापहारकम् ।
वली पलितकं हन्ति विद्यात्पुष्टिकरं परम् ॥

( निघंटुरत्नाकर, पारदसंहिता पृष्ठ ३१५ )

सर्पविषयोगेन पारदभस्म

व्यालस्य गरले सूतं मर्दयेत्सप्तवासरम् ।
शम्भुनालकृते यंत्रे तन्मध्येतद्रसं क्षिपेत् ॥
वह्निं प्रज्वालयेद्गाढं वारिणा चोर्ध्वशीतलम् ।
याम द्वादशकं चैव सुसिद्धो जायते रसः ॥

( रसराजसुन्दर, पारदसंहिता पृष्ठ ३१६ )

कान्तलौहपुटे पारदभस्म

कुम्भीं समूलामुद्धृत्य गोमूत्रेण सुपेषयेत् ।
तद्द्रवैर्मर्दयेत्सूतं दिनैकं कान्त सम्पुटे ॥
लिप्त्वा नियामकादेया उर्ध्वंचाधस्तदन्धयेत् ।
मृद्वग्निना दिनैकन्तु पचेच्चुल्ल्यां मृतोभवेत् ॥
गोघृतं गन्धकं सूतं पिष्ट्वा पिण्डीं प्रकल्पयेत् ॥
कुमारी दल मध्यस्थं कृत्वा सूत्रेण वेष्टयेत् ॥
तं कान्तसम्पुटे रुद्ध्वा त्रिभिर्लघुपुटैः पचेत् ।
ततो ध्माते भवेद्भस्म चान्ध मूषागतोरसः ॥
रसोनियामकैर्मर्द्यो दृढं याम चतुष्टयम् ।
द्विगुणैर्गन्धतैलैश्च पचेन्मृद्वग्निना शनैः ॥
यावत्खाटो भवेत्तावद्रोधयेल्लोह संपुटे ।
हरीतकी जले पिष्ट्वा लोहकिट्टेन मूषिकाम् ॥
कृत्वा तन्मध्यतः क्षिप्त्वा संपुटं चान्धयेत्पुनः ।
तस्योर्द्ध स्रावकाकारं हृत्वा नागं द्रुतं क्षिपेत् ॥
कठिनेन धमेत्तावद्यावन्नागो द्रुतो भवेत् ।
प्रधमेच्च पुनस्तावद्यावत्कठिनतां व्रजेत् ॥

एवं पुनः पुनर्ध्मातक्रियामिम्रियते रसः ।

( रसरत्नाकर )

मूलीविषप्रयोगेण पारदभस्म ।

उन्मत्त विजयार्कं वा कांजिकं सूत धावने ।
हालाहलेन तुल्येन दरदोत्थं विमर्दयेत् ॥
नष्ट पिष्टं तु तज्ज्ञात्वा भावयेत्पद्मिनीदलैः ।
गोधूमराशौ संस्थाप्य मासमेकं ततः पुनः ॥
निष्कास्य क्षालयित्वातमहिफेनेन मर्दयेत् ॥
कुर्याच्च पूर्ववत् पश्चाच्चत्रमारेण मर्दयेत् ॥
कमलस्य रसेनापि कृष्णोन्मत्त रसेन च ।
हिंगुना गंध पाषाणसत्वेनाथ विमर्द्य च ॥
षण्मासान्तरतः स्थाप्यः सूरणस्योदरे रसः ।
एवं वर्णेण सिद्धः स्याद्रसराट् च स्वयं मतः ॥
दृश्यते चूर्ण संकाशो जीवनाख्यो रसोत्तमः ।
देयो गुणो न चेतेच्चत्वं ब्रह्मापि न चेतयेत् ॥

( आ०प्रकाश, पृष्ठ १४७ )

गंधामृतरसः

भस्म सूतं द्विधागन्धं क्षणं कन्याम्बुमर्दितम् ।
रुध्वा लघु पुटे पच्यात्लेहयेन्मधु सर्पिषा ॥
निष्क मात्रं जरामृत्युः हन्ति गन्धामृतो रसः ।
समूलं भृङ्गराजं तु छाया शुष्कं विचूर्णयेत् ॥
तत्समं त्रिफलाचूर्णं सर्वतुल्या सिताभवेत् ।
पलैकं भक्षयेच्चानु वर्षान्मृत्युजरापहः ॥

( रसेन्द्रचिन्तामणि, पृ० ५८ )

चिरञ्जीवन कल्पः

रसभस्म गुडूच्याश्च सत्वमेकत्र तद्द्वयम् ।
क्रियते शाल्मलीसत्वे तद्द्वयं परिभाव्य च ॥
पञ्चाशद्भावनास्तापे शाल्मली सत्वकस्य च ।
टंकद्वयमिदंचूर्णं यदि गृह्णाति तत्कचित् ॥
शाल्मली सत्वमनुच चतुस्तोलं पिवेद्दिने ।
दिने प्रभात समये तीक्ष्णाम्ल परिवर्जयेत् ॥
दुग्धभक्ताशनः शान्तो भूमिशायी जितेन्द्रियः ।
त्रिमासादूर्ध्वतः केशाः कालालिकुल सन्निभाः ॥
अजरामरं शरीरं बयस्तम्भो महामतिः ।
एवं कल्पो विधातव्यो चिरंजीवितु मिच्छता ॥

( रससारपद्धति, पारदसंहिता, पृष्ठ ३३७ )

योगवाही रसः ।

भागा रसस्य चत्वारो गन्धकश्चाष्टभागिकः ।
सैन्धवस्य च भागौ द्वौ श्वेता जयन्तिका द्रवैः ॥
मर्दितं त्रिण्यहान्यस्य गोलकं कुरुशांपयः ।
तप्तमूषां जले क्षिप्त्वा गृहाणरसभस्मकम् ॥
संस्कृत्य कंटकाद्यैश्च यथेष्टं विनियोजयेत् ।
योगवाही रसोऽयं च प्रयोज्यः सर्व कर्मसु ॥

( रसपारिजात )

हेमसुन्दर रसः ।

मृतसूतस्य पादांशं हेमभस्मः प्रकल्पयेत् ।
क्षाराज्य मधुना मिश्रं माषैकं कांस्यपात्रके ॥
लेहयेन्मास षट्कं वै जरामृत्युविनाशनः ।

वाकुची चूर्णकर्षैकं धात्रीफलरसप्लुतम् ॥
अनुपानं लिहेन्नित्यं सरसो हेमसुन्दरः ।

( रससारपद्धति, पारदसंहिता पृ० ३३७ )

अमृतार्णव रसः ।

सूत भस्म चतुर्भागं लोहभस्म तथाष्टकम् ।
मेघ भस्म च षड्भागं शुद्धगन्धस्य पंचकम् ॥
भावयेत्त्रिफला क्वाथैस्ततसर्वं भृङ्गजद्रवैः ।
शिग्रु वह्नि कटुक्याथ सप्तधा भावयेत्पृथक् ॥
सर्व तुल्या कणा योज्या गुडैर्मिश्रं पुरातनैः ।
निष्कमात्रं सदा खादेज्जरामृत्युं निहन्त्यलम् ॥
ब्रह्मायुः स्याच्चतुर्मासैः रसोऽयममृतार्णवः ।
तिलकोरंड पत्राणि गुडेन भक्षयेदनु ॥

( रससारपद्धति, पारदसंहिता पृष्ठ ३३७ )

चतुर्मुख रसः ।

रसगन्धक लौहाभ्रं समं सूतांघ्रि हेम च ।
सर्वान्खल्वतले क्षिप्त्वा कन्या स्वरसमर्दितम् ॥
एरंडपत्रैरावेष्ट्य धान्यराशौदिनत्रयम् ॥
संस्थाप्यच तदुद्धृत्य संचूर्ण्यमतिसुन्दरम् ॥
तद्यथाग्निबलं खादेत्त्रिफला मधु संयुतम् ।
एतद्रसायनवरं वली पलितनाशनम् ॥
क्षयमेकादशविधं कासं पंचविध तथा ।
कुष्ठमष्टादशविधं पाण्डुरोगान्प्रमेहकान् ।
शूलं कासं च हिक्कां च मन्दाग्निं चाम्लपित्तकम् ।

व्रणान्सर्वान्पक्षघातं विसर्पं विद्रधिं तथा ॥
अपस्मारं ग्रहोन्मादान्सर्वाशांसि त्वगामयान् ।
क्रमेण शीलितो हन्ति वृक्षानिंद्राशनिर्यथा ॥
पौष्टिकं बल्यमायुष्यं पुत्रप्रसवकारणम् ।
चतुर्मुखेन देवेन कृष्णात्रेयेण सूचितम् ॥

( रससार पद्धति, पारदसंहिता पृष्ठ ३३८ )

त्रिनेत्र रसः

रस गन्धक ताम्राणि निन्दुवार रसैर्दिनम् ।
मर्दयेदातपे पश्चाद्वालुकायंत्र मध्यगम् ॥
रुध्वा मूषा गतं यामत्रयं तीव्राग्निना पचेत् ।
तद् गुञ्जा सर्व रोगेपु पर्णं खंडिकया पुनः ॥
दातव्यो देह सिध्यर्थं पुष्टि वीर्य बलाय च ।

( रससार पद्धति, पारदसंहिता पृष्ठ ३३८ )

दरदेश रसः

पंचपलं दरदं पलमेकं शुद्धबलिं मृदुवह्नि गतायाम् ।
कज्जलिकां विरचय्य तु तालं माषमितं विनियोज्य च कूप्याम् ॥
विपचेतसिकतासुदिनंदहनैस्तदनुस्वत एव हिमं च हरेत् ।
दरदेश इति क्षयनाशकरो भवतीह रसः सकलामयजित् ॥

( बृहद्योगतरंगिणी, पारदसंहिता पृष्ठ ३३८ )

हिंगुलेश्वरः

तुल्यांशं मर्दयेत् खल्वे पिप्पली हिंगुलं विषम् ।
द्विगुञ्जं मधुना देयं वातज्वर विमुक्तये ॥

( रसेन्द्रसारसंग्रह, पृष्ठ ७२ )

तरुणज्वरारिः

जयपालगन्धं विषपारदं च तुल्यं कुमारीस्वरसेन पिष्टम् ।
अस्य द्विगुञ्जाहि सितोदकेन ख्यातो रसोऽयं तरुणज्वरारिः ॥
दातव्य एषोऽहनि पञ्चमे वा षष्ठेऽथवा सप्तम एव वापि ।
जाते विरेके विजितज्वरः स्यात् पटोल मुद्गाम्बु निषेवणेन ।

( रसेन्द्रसारसंग्रह, पृष्ठ ७६ )

वज्रकपाट रसः

पारदं गन्धकं चैवाहिफेनं सह मोचकम् ।
त्रिकटु त्रिफलाञ्चैव सममेकत्र कारयेत् ॥
भङ्ग भृङ्ग द्रवैश्चैतत् भावयेच्च पुनः पुनः ।
रक्ति त्रयं ततश्चैव मधुना सह भक्षयेत् ॥
असाध्यां ग्रहणीं हन्ति रसो वज्रकपाटकः ।

( रसेन्द्रसारसंग्रह, पृष्ठ १२० )

पञ्चामृत पर्पटी

अष्टौ गन्धक तोलका रसदलं लौहं तदर्धं शुभम् ,
लौहार्धं च वराभ्रकं सुविमलं ताम्रं तदर्धाधिकम् ।
पात्रे लौहमये च मर्दन विधौ चूर्णीकृतञ्चैकतः ,
दर्व्या बादरवह्निनातिमृदुना पाकं विधिज्ञैः कृते ॥
रम्भाया लघु ढालयेत् पटुरियं पञ्चामृता पर्पटी ,
ख्याता क्षौद्र घृतान्विता प्रतिदिनं गुञ्जाद्वय ग्रहणिनः ।
लौहे मर्दन योगतः सुविमलं भस्मक्रिया लौहवत् ,
गुञ्जाष्टावथवात्रिकं त्रिगुणितं सप्ताहमेव भजेत् ॥

( भैषज्यरत्नावली, पृष्ठ २१६ )

महारसगन्धकम् ।

रस गन्धकयोर्ग्राह्य कर्ष मेकं सुशोधितम् ।
ततः कज्जलिकां कृत्वा मृदुपाकेन शोधयेत् ।
जाती फलं तथा कोषं लवङ्गारिष्ट पत्रके ।
एतेषां कर्ष मात्रेण सह चूर्णेन मर्दयेत् ।
मुक्ता गृहे पुनः स्थाप्यं पुटपाकेन साधयेत् ॥
गुञ्जाद्वय प्रमाणेन वटिकां कारयेद्बुधः ।
एतत् प्रोक्तं कुमाराणां रक्षणाय महौषधम् ॥
अर्शोघ्नं दीपनं चैव बलवर्ण प्रसादनम् ।
दुर्वार ग्रहणीरोगं जयेच्चैव प्रवाहिकाम् ॥
सूतिकाख्यं जयेदेतदपि वैद्यविवर्जितम् ॥

( रसेन्द्रसारसंग्रह, पृष्ठ १२३ )

पाण्डुसूदन रसः ।

रसं गन्धं मृतं ताम्रं जयपालञ्च गुग्गुलुम् ।
समांशमाज्यसंयुक्तां गुडिकां कारयेद्भिषक् ॥
एकैकां खादयेन्नित्यं पांडुशोथोपशान्तये ।
शीतलञ्च जलं चाम्लं वर्जयेत् पाण्डुसूदने ॥

( रसेन्द्रसार संग्रह, पृष्ठ १६६ )

रसेन्द्र गुडिका ।

कर्ष शुद्ध रसेन्द्रस्य स्वरसेन जयार्द्रयोः ।
शिलायां खल्वयेत्तावद्यावत् पिण्डं घनं ततः ॥
जलकणा काक माची रसाभ्यां भावयेत्पुनः ।
सौगन्धिकपलं भृङ्ग स्वरसेन विभावितम् ॥

चूर्णितं रससंयुक्तमजाक्षीरपलद्वये ।
खल्लितं घनपिण्डंतु गुर्डी स्विन्नकलायवत् ॥
कृत्वादौ शिवमभ्यर्च्य द्विजातीन् परितोष्य च ।
जीर्णान्नो भक्षयेदेकां क्षीरमांसरसाशनः ॥
सर्व्वरूपं क्षयं कासं रक्तपित्तमरोचकम् ।
अपि वैद्यशतैस्त्यक्तमम्लपित्तं नियच्छति ॥

( चक्रदत्त, पृष्ठ १७३ )

राजमृगाङ्क रसः ।

रसभस्म त्रयोभागा भागैकं हेमभस्मकम् ।
मृतताम्रस्य भागैकं शिला गन्धक तालकम् ॥
प्रतिभाग द्वयं शुद्धमेकीकृत्य विमर्दयेत् ।
वराटीं पूरयेत्तेन अजाक्षीरेण टङ्कणम् ॥
पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तत् निधापयेत् ।
शुष्कं गजपुटे पाच्यं चूर्णयेत् स्वाङ्गशीतलम् ॥
रसोराजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः ।
दश पिप्पलिकं क्षौद्रैर्मरिचैकोनविंशतिम् ॥
सघृतैर्दापयेद् वैद्यो वातश्लेष्म भवे क्षये ।

( भैषज्यरत्नावली, पृ० २६२ )

चिन्तामणि रसः ।

कर्षैकं रस सिन्दूरं तत्समं मृतमभ्रकम् ।
तदर्द्धं मृत लौहञ्च स्वर्ण शाणं क्षिपेद्बुधः ॥
कन्यारसेन सम्पिष्य गुञ्जामानां वटींश्चरेत् ।
अनुपानादिकं दद्यात् बुद्ध्वा दोष बलाबलम् ॥
हन्ति पित्तात्मकं वायुं केवलं पित्त संयुतम् ।

हृल्लासमरुचिं दाहं वान्तिं भ्रान्तिं शिरोग्रहम् ॥
प्रमेहं कर्णनादञ्च जड गद्गद मूकताम् ।
बाधिर्यं गर्भिणीरोगमश्मरीं सूतिकामयम् ॥
प्रदरं सोमरोगञ्च यक्ष्माणं ज्वरकासकम् ।
बलवर्णाग्निदः सम्यक् कान्ति पुष्टि प्रदायकः॥
चिन्तामणि रसश्चायं चिन्तामणिरिवापरः ।

( रसेन्द्रसारसंग्रह, पृ० २१५ )

विसूचिविध्वंस रसः

टङ्कणं माक्षिकं शुण्ठी पारदं गन्धकं विषम्
गरलं समभागेन सर्वेषां हिंगुलं समम् ॥
मर्दयेज्जम्बीर द्रावैर्वटी कार्य्या प्रयत्नतः ।
श्वेतसर्षपतुल्या च मृतसञ्जीवनी तथा ॥
विसूचीं नाशयत्याशु दध्यन्नं पथ्यमाचरेत् ।
त्रिदोषोत्थमतीसारं सर्वोपद्रव संयुतम् ॥

( भैषज्यरत्नावली, पृ० ६८६ )

स्वर्णसिन्दूर रसः ।

स्वर्ण सिन्दूरमभ्रञ्च मौक्तिकं कर्ष सम्मितम् ।
हेममाक्षिक वैक्रान्त वङ्गायांसि च पित्तलम् ॥
शिलाजतु प्रवालाब्धिफेन गुग्गुलु गन्धकान् ।
कोलमानेन संगृह्य भावयेद् वह्निवारिणा ॥
ततो गुञ्जाद्वयोन्मानां विधाय वटिकां भिषक् ॥
देवदारु कषायेण प्रातः सायञ्च योजयेत् ॥
स्वर्णसिन्दूर संज्ञोऽयं रसेषु प्रवरो रसः ।

स्नायुजान्निखिलान् रोगान् हन्ति नास्त्यत्र संशयः ॥

( भैषज्यरत्नावली, पृ० ६७८ )

रसराजेन्द्र रसः

हिंगुलोत्थं रसं गन्धं केशराजाम्बुशोधितम् ।
रसार्द्धं हेम तारञ्च नागं हेमार्द्धकं तथा ॥
क्षिप्त्वा खल्लतले पश्चाद् वासा क्वाथेन भावयेत् ।
काक माच्याश्चित्रकस्य निगुण्ड्याः कौटजस्य च ॥
स्थल पद्मस्योत्पलस्य सप्तकृत्वो द्रवैः पृथक् ।
ततो रक्तिमिता कुर्य्याद् वटीश्छांयांशु शोषिताः ॥
अन्त्रजान् निखिलान् रोगान् सर्वे दोषोद्भवांस्तथा ।
हन्त्ययं रसराजेन्द्रो मृगराजो यथा मृगान् ॥

( भैषज्यरत्नावली, पृ० ६६६ )

शक्रवल्लभो रसः

रस गन्धक लौहाभ्र रौप्य हेमानि माक्षिकम् ।
शाण मानेन संगृह्य तुगाक्षीरीञ्च कार्षिकीम् ॥
पलप्रमाणं विजयावीजञ्चैकत्र मर्दयेत् ।
विजया वारिणापश्चान्माषमानां वटीं चरेत् ॥
एकैकां भक्षणीयेषा पेयश्चानुपयः पलम् ।
श्रीशक्रवल्लभोनाम रसो वाजीकरः परम् ॥
वीर्य्यस्तम्भ करोऽत्यर्थं प्रमदादर्पनाशनः ।
गतोह्यप्सरसां शक्रो वाल्लभ्यं यत्प्रसादतः ॥

( भैषज्यरत्नावली, पृ० ६२६ )

कामिनीविद्रावणो रसः

आकारकरभं शुंठी लवङ्गं कुंकुमं कणाम् ।
जातीफलञ्च तत्कोषं चन्दनं कार्षिकं पृथक् ॥
हिंगुलं गन्धकं शाणं फणिफेनं पलोन्मितम् ।
गुञ्जात्रयमितां कुर्य्यात् सम्मर्द्य वटिकां भिषक् ॥
पयसा परिपीतोऽयं शुक्रस्तम्भ करो रसः ।
विद्रावणः कामिनीनां वशीकरण एव च ।

( भैषज्यरत्नावली, पृ० ६२६ )

बालरोगान्तक रसः

शाणं सूतस्य शुद्धस्य गन्धकस्य च तत्समम् ।
सुवर्णमाक्षिकस्यापि चार्द्धभागं विनिःक्षिपेत् ॥
ततः कज्जलिकां कृत्वा लौहपात्रे दृढे नवे ।
केशराजस्य भृङ्गस्य निगुण्ड्यः पत्र सम्भवम् ॥
स्वरसं काकमाच्याश्च ग्रीष्मसुन्दरकस्य च ।
सूर्य्यावर्त्तक शालिञ्च भेकपर्णी रसं तथा ॥
श्वेतापराजितायाश्च मूलं दद्याद्विचक्षणः ।
देयं रसार्द्ध भागेन चूर्णं मरिच सम्भवम् ॥
शुभे शिलामये पात्रे लौह दण्डेन मर्दयेत् ।
शुष्कमातपसंयोगाद् वटिकां कारयेद्भिषक् ॥
प्रमाणं सर्षपस्यैव बालानां विनियोजयेत ।
हन्ति त्रिदोषकञ्चैव ज्वरमामं सुदारुणम् ॥
कासं पञ्चविधञ्चापि सर्वरोगं निहन्ति च ।
शिशूनां रोगनाशाय निर्मितोऽयं महारसः ॥

भैषज्यरत्नावली, पृ० ६१० )

गर्भ चिन्तामणि रसः

रसं तालं तथा लौहं प्रत्येकं कर्ष मात्रकम् ।
कर्षद्वयं तथा चाभ्रं कर्पूरं वङ्गतालकम् ॥
जातीफलं तथा कोषं गोक्षुरञ्च शतावरी ।
बलातिबलयोर्मूलं प्रत्येकं तोलकं शुभम् ॥
वारिणा वटिका कार्या द्विगुञ्जाफलमानतः ।
सन्निपातं निहन्त्याशु स्त्रीणाञ्चैव विशेषतः ॥
गर्भिण्याज्वरदाहञ्च प्रदरं सूतिकामयम् ।

( भैषज्य रत्नावली पृष्ठ ६६२ )

प्रदरान्तको रसः

शुद्ध सूतं तथा गन्ध शुद्ध बंगक रूप्यकम् ।
खर्परञ्च वराटञ्च शाणमानं पृथक् पृथक् ॥
तोलकत्रितयं ग्राह्यं लौहचूर्णं क्षिपेत् सुधीः ।
कन्यानीरेण संमर्द्य दिनमेकं भिषग्वरः ॥
असाध्यं प्रदरं हन्ति भक्षणात् नात्र संशयः ।

( भैषज्य रत्नावली पृष्ठ ६८० )

अमृतांकुर वटी

अमृतं पारदं गन्धं लौहमभ्रं शिलाजतु ।
गुञ्जा मात्रां वटीं कुर्य्यात् मर्दयित्वामृताम्भसा ॥
एषाऽमृताङ्कुरवटी पीता धान्याम्भसा सह ।
क्षुद्ररोगानशेषांस्तु गदान् पित्तास्त्रकोपजान् ॥
ज्वरं जीर्णं प्रमेहञ्च कार्श्यमग्निक्षयं तथा ।
नाशयेजनयेत् पुष्टिं कान्तिं मेधां शुभां मतिम् ॥

( भैषज्य रत्नावली पृष्ठ ५७० )

मुखरोगहरो रसः

रसगन्धौ समौ ताभ्यां द्विगुणञ्च शिलाजतु ।
गोमूत्रेणविमर्द्याथ सप्तधार्कद्रवेण च ॥
जाती निम्ब महाराष्ट्री रसैः सिध्यति पाकहा ।
कणामधुयुता हन्ति मुखपाकं सुदारुणम् ।
अष्ट गुञ्जा धृता वक्त्रे सद्यो हन्ति वटी गदान् ।
महाराष्ट्याश्च कल्केन मुखञ्च प्रतिसारयेत् ॥
धारणात् वदने चैषा वटी हन्ति मुखामयान् ।
दन्तकाष्ठं स्नानमम्लं मत्स्यमानूपमामिषम् ॥
दधि क्षीरं गुडं माषं रुक्षान्नं कठिनाशनम् ।
अधोमुखेन शयनं गुर्वभिष्यन्दकारिच ।
मुखरोगेषु सर्वेषु दिवानिद्रां विवर्जयेत् ।

( भैषज्य रत्नावली पृष्ठ ५५६ )

महा कल्याण वटी

हेमाभ्रञ्च रसं गन्धमयो मौक्तिकमेव च ।
धात्रीरसेन संमर्द्य गुञ्जामात्रांवटीं चरेत् ॥
भक्षयेत् प्रातरुत्थाय तिलक्षौद्रमधुप्लुताम् ॥
सिताक्षौद्रयुतां वापि नवनीतेन वा सह ॥
अयथा पानजारोगा वातजाः कफपित्तजाः ।
गदाः सर्वे विनश्यन्ति ध्रुवमस्य निषेवणात् ॥

( भैषज्य रत्नावली पृ० ५१४ )

चण्डभैरवः

मृतसूतार्कलौहञ्च तालं गन्धं मनः शिला ।
रसाञ्जनञ्च तुल्यांशं गोमूत्रेणापि मर्दयेत् ॥

तं गोलं द्विगुणं गन्धं लोहपात्रे क्षणं पचेत् ॥
पञ्च गुञ्जामितं भक्ष्यमपस्मारहरं परम् ॥
हिंगु सौवर्चलं कुष्ठं गवां मूत्रेण सर्पिषा ।
कर्षमात्रं पिवेच्चानु रसेऽस्मिंश्चण्डभैरवे ॥

( भैषज्य रत्नावली पृ० ५१३ )

भूतांकुशोरसः

सूतायस्तारताम्रञ्च मुक्ता चापि समं समम् ।
सूतपादं तथा वज्रं तालं गन्धं मनःशिला ॥
तुत्थं तिलाञ्जनं शुद्धमब्धिफेनं रसाञ्जनम् ।
पञ्चानां लवणानाञ्च प्रतिभागं रसोन्मितम् ॥
भृङ्गराजचित्रावज्रीदुग्धेनापि विमर्दयेत् ।
दिनान्ते पिण्डितं कृत्वा रुद्ध्वा गजपुटे पचेत् ॥
भूताङ्कुशोरसोनाम नित्यं गुञ्जाद्वयं लिहेत् ।
आर्द्रकस्य रसेनापि चोन्मादे भूतजिद्रसः ।
माहिषञ्च घृतं क्षीरं गुर्वन्नमपि भोजयेत् ॥
अभ्यङ्गः कटुतैलेन हितो भूताङ्कुशे रसे ।

( भैषज्य रत्नावली पृ० ५१० )

शिरः शूलाद्रिवज्ररसः

पलं रसं पलं गन्धं पलं लौहं पलं त्रिवृत् ।
गुग्गुलोः पलचत्वारि तदर्द्धं त्रिफलारजः ॥
कुष्ठं मधु कणा शुण्ठी गोक्षुरं कृमिनाशनम् ॥
दशमूलञ्च प्रत्येकं तोलकं वस्त्रशोधितम् ।
क्वाथेनदशमूल्याश्च यथास्वं परिभावयेत् ।
घृतयोगात् प्रकर्त्तव्या माषिका वटिका शुभा ॥

रसगुड़िका

रसस्तु पादिकस्तुल्या विडङ्गमरिचाभ्रकाः ।
गङ्गापालङ्कजरसे खल्लयित्वा पुनः पुनः ॥
रक्तिमात्रा गुदार्शोघ्नी वन्हेरत्यर्थ दीपनी ।
कण्टकिफलान्तर्मुपलक्षारो गोरोचनाजलम् ॥
लेप मात्रेण विस्राव्य रसान् हन्ति गुदांकुरान् ।
भावितं रजनीचूर्णैः स्नुहीक्षीरे पुनः पुनः ॥
बन्धनात् सुदृढं सूत्रं छिन्नत्यर्शो न संशयः ।
वेगावरोधं स्त्री पृष्ठयानमुत्कटकासनम् ॥
यथास्वं दोषलञ्चान्नमर्शसः परिवर्जयेत् ।

( भैषज्य रत्नावली पृ० ४७२ )

नित्योदितरसः

मृतसूतार्क लौहाभ्रं विषं गन्धं समं समम् ।
सर्वं तुल्यांश भल्लातफलमेकत्र चूर्णयेत् ॥
द्रवैः शूरण माणोत्थैर्भाव्यं खल्ले दिनत्रयम् ।
माषमात्रं लिहेदाज्ये रसैश्चार्शांसि नाशयेत् ॥
रसो नित्योदितो नाम गुदोद्भव कुलान्तकः ।

( भैषज्य रत्नावली पृष्ठ ४७२ )

अमृतांकुर लौहम्

हुताशमुखसंशुद्धं पलमेकं रसस्य व ।
पलं लौहस्य ताम्रस्य पलं भल्लातकस्य च ॥
गन्धकस्य पलञ्चैकमभ्रकस्य च गुग्गुलोः ।
हरीतकीविभीतक्योश्चूर्णं कर्षद्वयं द्वयोः ॥
अष्टमाषाधिकं तत्र धाव्याः पाणितलानि षट् ।
घृतं द्व्यष्ट गुणं लौहात् द्वात्रिंशत् त्रिफलाजलम् ।

एवं कृत्वा पचेत् पात्रे लौहे च विधि पूर्वकम् ।
पाकमेतस्य जानीयात् कुशलो लौहपाकवत् ॥
विबुद्धः प्रातरुत्थाय गुरुदेव द्विजार्च्चकः ।
रक्तिकादि क्रमेणैव घृतं भ्रामरमर्दितम् ॥
लौहे लौहस्य दण्डेन कुर्य्यादेतद्रसायनम् ।
अनुपानञ्च कुर्वीत नारिकेलोदकं पयः ॥
सर्वं कुष्ठहरं श्रेष्ठं वलीपलितनाशनम् ।
पाण्डु मेहामवातघ्नं वातरक्तरुजापहम् ॥
कृमि शोथाश्मरीशूल दुर्नाम वातरोगनुत् ।
क्षयं हन्ति महाश्वासमत्यर्थं शुक्रवर्द्धनम् ॥
अग्निसन्दीपनं हृद्यं कान्त्यायुर्बल वृद्धिकृत् ।
विवर्ज्य शाकाम्लमपि स्त्रियञ्च, सेव्योरसो जाङ्गलजाविकानाम् ।
शाल्योदनं षष्टिकमाज्यमुद्गक्षौद्रं गुडक्षीरमिहक्रियायाम् ॥
शालिञ्च गुर्वादिबृहत्करञ्च शिलाजतुक्षौद्रयुतं पयश्चः ।
सर्पियतान् भक्षयतो विहङ्गान् प्रपूर्य्यते दुर्बलदेहधातुः ॥
कृष्णस्य पक्षस्य सिते तु पक्षे त्रिपञ्चरात्रेण यथा शशाङ्कः ।

( भै० र० पृ० ४६० )

श्वेतारिः

शुद्धसूतं समं गन्धं त्रिफलां भृङ्गवागुञ्जीम् ।
भल्लातकं तिल कृष्णां निम्बबीजं समं समम् ॥
मर्दयेद् भृङ्गजद्रावैः शोष्यं पेष्यं पुनः पुनः ।
इत्थं कुर्युस्त्रिसप्ताहं रसः श्वेतारिकोभवेत् ॥
मध्वाज्यर्माषि मात्रं तु खादेद् श्वेतं विनाशयेत् ।

( भै० र० पृ० ४५० )

वातरक्तान्तकोरसः

पारदं गन्धकं लौहं घनं तालं मनःशिला ।
शिलाजतु पुरं शुद्धं समभागं विचूर्णयेत् ॥
विडङ्गं त्रिफला व्योषमब्धिफेनं पुनर्नवा ।
देवदारुचित्रकश्च दार्वी श्वेतापराजिता ॥
चूर्णमेषां पृथक् तुल्यं सर्वमेकत्र भावयेत् ।
त्रिफला भृङ्गराजस्य रसेनैव त्रिधा त्रिधा ॥
सम्भाव्य भक्षयेत् पश्चान्माष मात्रं दिने दिने ।
कृत्वानुपानं निम्बस्य पत्रं पुष्पं त्वचं समम् ॥
शाण मात्रं घृतैः कुर्य्यात् सर्ववात विकारनुत् ।
वातरक्त महाघोरं गम्भीरं सर्वजं जयेत् ॥
सर्वोपद्रवसंयुक्तं साध्यासाध्यं निहन्त्ययम् ।

(भै० र० पृ० ४४३)

रसाभ्रगुग्गुलुः

कर्ष द्वयं पारदस्य लौहं गन्धञ्च तत्समम् ।
लौहगन्धसमंचाभ्रं गुग्गुलं कुडवद्वयम् ॥
अमृताया रसप्रस्थे रसप्रस्थे फलत्रिकं ।
सान्द्रीभूते रसे तस्मिन् गर्भे दत्वाविचक्षणः ॥
त्रिकटु त्रिफलादन्ती गुडूची चेन्द्रवारुणी ।
विडङ्गनागपुष्पञ्च त्रिवृता च सुचूर्णितम् ॥
प्रत्येकं कर्षमादाय सर्वमेकत्र कारयेत् ।
भक्षयेत् कोलमात्रन्तु छिन्ना क्वाथानुपानतः ॥
वातरक्तं महाघोरं स्फुटितं गलितं जयेत् ।
अष्टादश विधं कुष्ठं कृमिरोगाश्मरीं तथा ।

भगन्दरं गुदभ्रंशं श्वेतकुष्ठं सकामलाम् ।
अपचीं गण्डमालाञ्च पामां कण्डूं विचर्चिकाम् ॥
चर्मकीलं महादद्रुनाशयेन्नात्र संशयः ।
वातरक्त विनाशाय धन्वन्तरि कृतः पुरा ॥
रसाभ्र गुग्गुलुः ख्यातो वातरक्तेऽमृतोपमः ॥

( भैषज्य रत्नावली पृ० ४४३ )

श्लीपद गजकेसरी

व्योषामृतायमानी च सूतोऽग्निर्गन्धकं शिला ।
सौभाग्यं जयपालञ्च चूर्णमेकत्रकारयेत् ॥
भृङ्ग गोक्षुरु जम्बीरार्द्रक तोयैर्विमर्दयेत् ।
अस्य रक्ति द्वयं खादेदुष्णतोयानुपानतः ॥
श्लीपदं दुस्तरं हन्ति प्लीहानं हन्ति सेवितः ।

( भैषज्य रत्नावली पृ० ४२६ )

भक्तोत्तरीयम्

अभ्रकं गन्धकञ्चैव पिप्पलीलवणानि च ।
त्रिक्षारं त्रिफला चैव हरितालं मनःशिला ।
पारदश्चाजमोदाच्च यवानी शतपुष्पिका ।
जीरकं हिंगु मेथी च चित्रकं चविका बचा ॥
दन्ती च त्रिवृता मुस्तं शिला च मृत लोहकम् ।
अञ्जनं निम्बबीजानि पटोलं वृद्धदारकम् ॥
सर्वाणि चाक्षमात्राणि श्लक्ष्णाच्चूर्णानि कारयेत् ।
शतं कानक बीजानि शोधितानि प्रयोजयेत् ॥
एतदग्निविवृद्ध्यर्थमृषिभिः परिकीर्त्तितम् ।
श्लीपदान्यन्त्रवृद्धिश्च वातवृद्धिश्च दारुणम् ॥

अरुचिं चामवातञ्च शूलं वातसमुद्भवम् ।
गुल्मञ्चैवोदरव्याधीन्नाशयत्याशु तत्क्षणात् ॥
भक्तोत्तरमिदंचूर्णमश्विभ्यां निर्मितं पुरा ।

( भैषज्य रत्नावली, पृ० ४२१ )

पुष्पधन्वा

हरजभुजगलौहश्चाभ्रकं बङ्ग चूर्णं—
कनकविजययष्टीशाल्मलीनागवल्ली ।
घृतमधुसितदुग्धं पुष्पधन्वा रसेन्द्रो ।
रमयति शतरामा दीर्घमायुर्बलञ्च ॥

( कनकादिक्काथेन भावयित्वा घृतादिभिर्योजयेत् )

पूर्णचन्द्रः

सूताभ्रलौहंसशिलाजतुस्याद् विडङ्गताप्येमधुना घृतेन ।
पिष्टं प्रशस्त खलु पूर्णचन्द्रो माषोऽस्य पुष्ट्यैर्भवति प्रशस्तः ॥

कामाग्नि सन्दीपनः

पलपरिमित शुद्धं सूतकं गन्धतुल्यम् ।
दरदकुनटि तुल्यं भावितं शृङ्गवेरैः ॥
तदनु कनकबीजैर्भावितं सप्तवारान् ।
तदनु सितजयन्त्या भृङ्गराजैश्च सर्वम् ॥
पुटितमुपरि शुष्कं काच कूप्यान्तु क्षिप्तं ।
षडहमुपरि पाच्यं बालुकायन्त्रकैश्च ॥

एलाजातीन्द्रचन्द्रैर्मृगमदसहितैः सौवर्णैः साश्वगन्धै ।
स्तुल्यैर्वल्लप्रमाणं प्रतिदिनमशितं प्रातरुत्थाय शुद्ध्यैः ॥

ओजः पुष्टिविवर्द्धनोऽतिबलकृत्सर्वेन्द्रियानन्दनः ।
सर्वातङ्कहरो रसायन परः कामाग्नि सन्दीपनः ॥

( भै० र० पृ० ४१७ )

मकरध्वजरसः

सिन्दूरं हेमलौहञ्च देवपुष्पं सचन्द्रकम् ।
जातीफलं मृगमदञ्चैकत्र परिमर्दयेत् ॥
पर्णाम्भसा ततः कुर्य्याद्वटिकां वल्लसम्मिताम् ।
सेवितश्छागपयसा प्रमेहांस्तत् कृतान् गदान् ॥
क्लैब्यं धातुक्षयं कासं जीर्णञ्च विषमं ज्वरम् ।
रसोऽयं नाशयेत्तूर्णं मकरध्वज संज्ञकः ।

( प्रमेहपिडिकायामत्युपयोगी )

( भै० र० पृ० ४०७ )

कामधेनुरसः

सिन्दूरमभ्रं नागञ्च कर्पूरं हेममाक्षिकम् ।
खर्परं रजतञ्चापि मर्दयेत्कमलाम्भसा ॥
ततो गुञ्जामिताः कृत्वा वटीश्छायाप्रशोषिताः ।
एकैकां दापयेदासां कसेरुस्वरसेन च ।
प्रमेहान् विंशतिं हन्ति शुक्रमेहं विशेषतः ॥
ज्वरं जीर्णञ्च यक्ष्माणं कामधेन्वाभिधोरसः ॥

( भै० र० )

कन्दर्परसः

रसं गन्धं प्रवालञ्च काञ्चनं गिरिमृत्तिका ।
वैक्रान्तं रजतं शङ्खं मौक्तिकञ्च समं समम् ॥
न्यग्रोधस्य कषायेण भावयित्वा च सप्तधा ।
वल्लोन्मानां वटीं कृत्वा त्रिफलाक्वाथ वारिणा ॥

सुरप्रियस्यार्जुनस्य क्वाथेनाभाम्भसा पिबेत् ।
औपसर्गिक मेहस्य* शान्त्यर्थं विनियोजयेत् ॥

( भै० र० पृ० ४०४ )

हेमनाथ रसः

सूतं गन्धं हेम तार्प्यं प्रत्येकं कोल सम्मितम् ।
अयश्चन्द्रं प्रवालञ्च बङ्गंश्चार्द्ध विनिक्षिपेत् ॥
फणिफेनस्यतोयेन कदलीकुसुमेन च ।
उदुम्बररसेनापि सप्तधा परिमर्दयेत् ॥
वल्लमात्रां वटीं खादेद्यथा व्याध्यनुपानतः ।
प्रमेहान् विंशतिर्हन्ति बहुमूत्रं सुदारुणम् ॥
सोमरोगं क्षयञ्चैव श्वासं कासमुरःक्षतम् ।
हेमनाथ रसो नाम्ना कृष्णात्रेयेण भाषितः ॥

( भै० र० पृ० ४८१ )

वसन्त कुसुमाकरः

वैक्रान्तस्य च भागैकं द्विभागं हेमभस्मनः ।
अभ्रकस्य च भागौ द्वौ मुक्ता विद्रुमयोस्तथा ॥
बङ्गभस्म त्रिभागं स्यात् रसस्य भस्मनस्तथा ।
चत्वारोऽस्य च भागाश्च सर्वमेकत्र मर्दितम् ॥
जम्बीराद्भिश्च गोदुग्धैरुशिरोद्भववारिभिः ।
वृषद्रवैरिक्षुनीरैः सप्तधा भावयेत्पृथक् ॥
भावितो रसराजः स्यात् वसन्तकुसुमाकरः ।
वल्लोऽस्य मधुना लीढः सोमरोगं क्षयं नयेत् ॥

* पूयमेहः गनोरिया इति प्रसिद्धः ।

मूत्रातिसारं मेहांश्च मूत्राघाताश्मरीरुजम् ।
तृष्णां दाहं तालुशोषं नाशयेन्नात्र संशयः ॥
बल्यः पुष्टिकरो वृष्यः सर्वरोगनिबर्हणः ।
हन्त्यजीर्णं ज्वरं श्वासं क्षयरोगं कृशाङ्गताम्
नातः परतरं किञ्चिद्रसायनमिहेष्यते ।
( रसभस्मः तदभावे मूर्च्छित रसः । मूत्रातिसारे सोम रोगे च रसायनम् ॥ )

( भै० र० पृ० ४०१ )

इन्द्रवटी

मृतं सूतं मृतं वंगमर्जुनस्य त्वचा सिता ।
तुल्यांशं मर्दयेत् खल्ले शाल्मल्या मूलजैर्द्रवैः ॥
दिनान्ते वटिका कार्या माषमात्रा प्रमेहहा ।
एषा चेन्द्रवटी नाम्ना मधुमेहप्रशान्तये ॥
त्रुटिं शाल्मलिमूलानां मधुना चानुपाययेत् ।

( भै० र० पृ० ३६७ )

तारकेश्वर रसः

मृतं सूतं मृतं लौहं मृतंवङ्गाभ्रकं समम् ।
मर्दयेत् मधुना चाह्नो रसोऽयं तारकेश्वरः ॥
माषमात्रं लिहेत् क्षौद्रैर्बहुमूत्रापनुत्तये ।
औदुम्बरं पक्वफलं चूर्णितं मधुनालिहेत् ॥

( भै० र० पृ० ३६२ )

रसशेखरः

पारदञ्चाहिफेनञ्च द्विर्द्वादशरक्तिकम् ।
अयः पात्रे निम्बकाष्ठे मर्दयेत्तुलसी द्रवैः ॥
तस्मिन् संमूर्च्छिते दद्याद्दरदं रससम्मितम् ।

मर्दयेच्च तुलस्यैव ततश्चैतानि दापयेत् ॥
जातीकोषफले चैव पारसीय यवानिकाम् ।
आकारकरभश्चैव द्वात्रिंशद्रक्तिकाम्प्रति ॥
मर्दयेत्तुलसीतोयैरेतेषांद्विगुणांशुभम् ।
दद्यात् खदिरसत्वं च वटिका चणक प्रभा ॥
सायं द्वे द्वे प्रयोज्ये च लवणाम्लञ्च वर्जयेत् ।
गलत् कुष्ठं तथास्फोटान् दुष्टान् गर्दभिकामपि ॥
ये स्युर्व्रणानृणामन्ये उपदंशपुरःसराः ।
तान्सर्वान् नाशयत्याशु सिद्धोऽयं रसशेखरः ॥

(भै० र० पृ० ३८४)

### रस गुग्गुलुः

ग्राह्यः पातनयन्त्रेण शुद्धश्चन्द्रसमो रसः ।
रक्तिकाशतमेतस्य शर्करा त्रिगुणा भवेत् ॥
ततश्चतुर्गुणोग्राह्यो गुग्गुलुर्महिषाक्षकः ।
घृतं रससमं दद्यात् मर्दयेच्च प्रयत्नतः ॥
विंशतिर्वटिकाः कार्यास्तिस्रस्तिस्रो दिनत्रयम् ।
ऐकादशदिनैरन्या देया एकादशैव ताः ॥
सप्ताहद्वय मेवञ्च कारयेद्भिषजां वरः ।
लवणं वर्जयेत् पथ्ये पादार्द्धाशनमिष्यते ॥
दिनद्वये व्यतीतेतु पादोनं पथ्यमाचरेत् ।
मसूरसूपं सगुडं व्यञ्जनं चाथकल्पयेत् ॥
पुनर्नवा पटोलानि तिक्तपत्री च गोक्षुरम् ।
पुटपत्रीं कोकिलाक्षं शाकार्थे घृतभर्जितम् ॥
शर्करा लवणस्थाने वेशवारे धनीयकम् ॥

लवङ्गाजाजीहिङ्गूनि धान्यकं जीरकाणिच ।
पाकार्थे संप्रदातव्यं संस्कारार्थं भिषग्वरैः ॥
भैरवस्य रसस्यान्याः क्रियाश्चात्र प्रयोजयेत्
रस गुग्गुलरेवं हि सर्वान् जित्वामयानयम् ॥
कुष्ठोपदंशनामानं व्रणं वातादिसंयुतम् ।
कामदेव प्रतीकाशश्चिरजीवीभवेन्नरः ॥

( भैषज्य रत्नावली पृ० ३८२ )

पाषाणभिन्नः

शुद्धसूतं द्विधा गन्धं शिलाजतु रसः पलम् ।
श्वेतंपुनर्नवावासारसैः श्वेतापराजितैः ॥
प्रतिदिनं त्र्यहं मर्द्यं शुष्कं तद्भाण्डसंपुटे ।
स्वेदयेद्दोलिका यन्त्रे संशुष्कं तं विचूर्णयेत् ॥
रसः पाषाणभिन्नः स्याद् द्विगुञ्जश्चाश्मरीं हरेत् ॥
भूधात्रीफलविशालां पिष्ट्वा दुग्धेन पाययेत् ॥
कुलत्थक्काथसंपीतमनुपानं सुखावहम् ।

( भैषज्य रत्नावली पृ० ३७६ )

तारकेश्वरः

शुद्धसूतं समं गन्धं लौहं बङ्गं मृताभ्रकम् ।
दुरालभां वक्षारं बीजं गोक्षुरजं शिवाम् ॥
समांशं भावयेत्सर्वं कुष्माण्डफलवारिणा ।
पञ्चतृणभवक्काथे रसे गोक्षुरजे तथा ॥
सम्पिष्य वटिका कार्या द्विगुञ्जाफलमानतः ।
मधुनामर्द्य विलिहेन्मूत्रकृच्छ्र विनाशनम् ॥
उडुम्बरफलं पक्वं चूर्णितं कर्षमात्रकम् ।

लेहयेत् मधुना सार्द्धमनुपानं सुखावहम् ॥
अजाक्षीरं भवेत् पथ्यं शर्करेक्षुरसो हितः ।
अमृता नागरं धात्री वाजिगन्धा त्रिकराटकम् ॥
प्रपिवेद्वातरोगार्त्तः सशूलो मूत्र कृच्छ्रवान् ॥
(भैषज्य रत्नावली पृ० ३७४)

आमवातेश्वरोरसः

शुद्धगन्धपलार्द्धञ्च मृतताम्रञ्चतत्समम् ।
ताम्रार्द्धं पारदं देयं रसतुल्यं मृतायसम् ॥
सर्वं पञ्चाङ्गुलदले ढालयेन्निपुणो भिषक् ।
सञ्चूर्ण्य पञ्चकोलस्य सर्वं काथे विमर्दयेत् ॥
रौद्रे विंशतिवारांश्च गुडूचीनां रसैर्दश ।
भृष्टटङ्कणचूर्णेन तुल्येन सह मेलयेत् ॥
टङ्कणार्द्धं विडं देयं मरिचं विडतुल्यकम् ।
तिन्तडी बीजचूर्णन्तु सूततुल्यञ्च दन्तिका ॥
त्रिकटु त्रिफला चैव लवङ्गञ्चार्द्धभागिकम् ।
आमवातेश्वरो नाम विष्णुना परिकीर्तितः ॥
महाग्निकारकोह्येष आमवातकुलान्तकः ।
स्थूलानां कुरुते कार्श्यं कृशानां स्थौल्यकारकम् ॥
अनुपानवशेनैव सर्वरोग कुलान्तकः ।
साध्यासाध्यं निहन्त्याशु चामवातं सुदारुणम् ॥
गुरुवृष्यान्नपानानि पयो मांसरसा हिताः ।
भोजयेत् कण्ठपर्य्यन्तं चतुर्गुणमितं रसम् ॥
कट्वम्ल तिक्तरहितं पिवेत्तदनु पानकम् ।
शीघ्रं जीर्य्यति तत्सर्वं जायते दीपनः परः ॥
अनेन सदृशो नास्ति वह्नि संदीपनो रसः ।

गुल्मार्शोग्रहणीरोग शोथपाण्डूदरापहः ॥

( भै० र० पृ० ३६८ )

विजयभैरवतैलम् ।

रसगन्धशिलातालं सर्वं कुर्य्यात् समांशकम् ।
चूर्णयित्वा ततः सूक्ष्ममारनालेन पेषयेत् ॥
तैलकल्केन संलिप्य सूक्ष्मवस्त्रं ततः परम् ।
तैलार्द्धं कारयेद्वर्त्तिमूर्ध्वं भागे च दीपयेत् ॥
वर्त्यधः स्थापिते पात्रे तैलं पततिशोभनम् ।
लेपयेत्तेन गात्राणि भक्षणाय च दापयेत् ॥
नाशयेत् सूत तैलं तद्वातरोगानशेषतः ।
बाहुकम्पं शिरःकम्पं जङ्घाकम्पं ततः परम् ॥
एकाङ्गञ्च तथा वातं हन्ति लेपान्न संशयः ॥

( भै० र० पृ० ३७२ )

चिन्तामणिचतुर्मुखः

विशुद्धं रससिंदूरं तदर्द्धं लौहमभ्रकम् ।
तदर्द्धं कनकं खल्वे कन्या स्वरस मर्दितम् ॥
एरण्ड पत्रैरावेष्ट्य धान्यराशौ निधापयेत् ।
त्रिदिनान्ते समुद्धृत्य सर्वरोगेषु योजयेत् ॥
एतद्रसायनवरं त्रिफला मधुसंयुतम् ।
तद्यथाग्निबलं खादेद्वली पलित नाशनम् ॥
अपस्मारं महोन्मादं रोगान्वातसमुद्भवान् ।
क्रमेण शीलितं हन्ति वृक्षमिन्द्राशनिर्यथा ॥

( भै० र० पृष्ठ ३५७ )

योगेन्द्ररसः

विशुद्धं रससिन्दूरं तदर्द्धं शुद्धहाटकम् ।

तत्समं कान्तलौहञ्च तत्समञ्चाभ्रमेव च ॥
विशुद्धं मौक्तिकञ्चैव वङ्गञ्च तत्समं मतम् ।
कुमारिकारसैर्भाव्यं धान्यराशौ दिनत्रयम् ॥
ततो रक्तिद्वयमितां वटीं कुर्य्याद्विचक्षणः ।
योगवाही रसो ह्येष सर्वरोग कुलान्तकः ॥
वातपित्तभवान् रोगान् प्रमेहान् बहुमूत्रताम् ।
मूत्राघातमपस्मारं भगन्दर गुदामयम् ॥
उन्माद मूर्च्छा यक्ष्माणं पक्षाघातं हतेन्द्रियम् ।
शूलाम्लपित्तकं हन्ति भास्करस्तिमिरं यथा ॥
त्रिफलारसयोगेन शुभया सितयापि वा ।
भक्षयित्वा भवेद्रोगी कामरूपी सुदर्शनः ॥
रात्रौ सेव्यं गवां क्षीरं कृशानाञ्च विशेषतः ।
योगेन्द्राख्यो रसो नाम्ना कृष्णात्रेय विनिर्मितः ।

( भै० र० पृ० ३५७ )

रसराजरसः

पलैकं शुद्धसूतस्य व्योमसत्वञ्च कार्षिकम् ।
तदर्द्धं काञ्चनं देयं कन्यारसविमर्दितम् ॥
लौहं रूप्यं मृतं वङ्गं वाजिगन्धां लवङ्गकम् ।
जातीकोषं तथा क्षीरकाकोलीञ्च तदर्द्धतः ॥
काकमाचीरसैः पिष्ट्वा पञ्चगुञ्जामितावटी ।
क्षीरञ्च शर्करातोयमनुपानं प्रकल्पयेत् ॥
पक्षाघातेऽर्दितेवाते हनुस्तम्भेऽपतन्त्रके ।
धनुस्तम्भेऽपताने च वाधिर्य्ये मस्तकभ्रमे ॥
सर्ववातविकारेषु रसराजः प्रकीर्तितः ।
बल्यो वृष्यश्च भोग्यश्च वाजीकरण उत्तमः ॥

( भै० र० पृ० ३५७ )

### शङ्कर वटी

रसस्य भागाश्चत्वारो बलेरष्टौ तथामताः ।
त्रयो लौहस्य नागस्य द्वावित्येकत्र मर्दयेत् ॥
भावयेत् काकमाच्याश्च चित्रकस्यार्द्रकस्य च ।
स्वरसेन जयन्त्याश्च वासाया विल्वपार्थयोः ॥
ततो गुञ्जाद्वयमिता विदध्याद्वटिका भिषक् ।
एकैकां दापयेदासामीषदुष्णेन वारिणा ॥
जयेदियं फुफ्फुसजान् रोगान् हृदयसम्भवान् ।
जीर्णज्वरं तथा घोरं प्रमेहानपि विंशतिम् ॥
कासश्वासामवातांश्च ग्रहणीमपि दुस्तराम् ।
वटी श्रीशङ्करप्रोक्ता बल पुष्टि विवर्द्धिनी ॥

( भै० र० पृ० ३२४ )

### हृदयार्णवरसः

सूतार्कगन्धकं क्वाथे वराया मर्दयेद्दिनम् ।
काकमाच्या वटीं कृत्वा चणमात्राश्च भक्षयेत् ॥
हृदयार्णवनामायं हृद्रोग दलनो रसः ।

( भै० र० पृ० ३२४ )

### श्वासचिन्तामणिः

द्विकर्षं लौहचूर्णस्य तदर्द्धं गन्धमभ्रकम् ।
तदर्द्धं पारदं ताप्यं पारदार्द्धेन मौक्तिकम् ॥
शाणमानं हेमचूर्णं सर्वं संमर्द्य यत्नतः ।
कण्टकारी रसैश्चापि शृङ्गवेररसैस्तथा ॥
छागीक्षीरेण मधुकैः क्रमेण मतिमान् भिषक् ।
गुञ्जाचतुष्टयञ्चास्य विभीतक समन्वितम् ॥
भक्षयेत् श्वासकासार्त्तो राजयक्ष्मनिपीडितः ।

( भै० र० पृ० ३१५ )

श्वासभैरवोरसः

रसं गन्धं विषं व्योषं मरिचञ्चव्य चित्रकम् ।
आर्द्रकस्य रसेनैव संमर्द्य वटिकां ततः ॥
गुञ्जाद्वयप्रमाणेन खादेत्तोयानुपानतः ।
स्वरभेदं निहन्त्याशु श्वासं कासं सुदुर्जयम् ॥

( व्योषस्थाने टङ्कनमिति कौमुद्याम् । अत्र पि मरिचस्य भागद्वयम् )

( भैषज्य रत्नावली पृ० ३१५ )

शृङ्गाराभ्रम्

शुद्धं कृष्णाभ्रचूर्णं द्विपलपरिमितं शाणमानं यदन्यत् ,
कर्पूरं जातिकोषं सजलमिभकणा तेज पत्रं लवङ्गम् ।
मांसी तालीशचोचे गजकुसुमगदं धातकी चेति तुल्यम् ,
पथ्याधात्री विभीतं त्रिकटु रथ पृथक् त्वर्द्ध शाणं द्विशाणम् ॥
एलाजातीफलाख्यं क्षितितल विधिना शुद्धगन्धाश्मकोलम् ,
कोलार्द्धं पारदस्य प्रतिपदविहितं पिष्टमेकत्र मिश्रम् ।
पानीयेनैव कार्याः परिणतचणकस्विन्नतुल्याश्च वट्यः ,
प्रातः खाद्याश्चतस्त्रस्तदनु च कियत्कुक्कुवेरं सपर्णाम् ॥
पानीयं पीतमन्ते ध्रुवमपहरति निप्रमादो विकारान् ,
कोष्ठे दुष्टाग्निजातं ज्वरमुदररुजो राजयक्ष्मक्षयश्च ।
कासंश्वासं सशोथं नयनपरिभवं मेहमेदोविकारान् ,
छर्दिं शूलाम्लपित्तं तृषमपि महतीं गुल्मजालंविशालम् ॥
पाण्डुत्वं रक्तपित्तं गरगरल गदान् पीनसान् प्लीहरोगान् ,
हन्यादामानिलोत्थान् कफपवनकृतान् पित्त रोगानशेषान् ।
बल्यो वृष्यश्च भोग्यस्तरुणतरकरः सर्वरोग प्रशस्तः ,

पथ्यं मांसैश्च यूषैर्घृतपरिललितैर्गव्यदुग्धैश्च भूयः ॥
भोज्यं मिष्टं यथेष्टं ललितललनया दीयमानं मुदा च ,
शृङ्गाराभ्रेण कामीयुवतिजनशता भोगयोगादतुष्टः ।
वर्ज्यं शाकाम्लमादौ दिनकतिचिदथ स्वेच्छया भोज्यमन्यद् ,
दीर्घायुः काममूर्तिर्गतवलिपलितो मानवोऽस्य प्रसादात् ॥

( भै० र० पृ० ३०७ )

बृहद्रसेन्द्रगुटिका

कर्षं शुद्धरसेन्द्रस्य गन्धकस्याभ्रकस्य च ।
लोहचूर्णस्य ताम्रस्य तालकस्य विषस्य च ।
मनः शिलायाः क्षाराणां बीजं धुस्तूरकस्य च ॥
मरिचस्यापि सर्वेषां समं चूर्णं प्रकल्पयेत् ।
जयन्ती चित्रकं माणघण्टकर्णोल्लमण्डुकी ॥
शाकाशनं भृङ्गराजं केशराजार्द्रकं तथा ।
सिन्धुवारस्य च रसैः कर्षमात्रैर्विभावयेत् ॥
कलायपरिमाणन्तु गुटिकां कारयेद्भिषक् ।
हन्ति पञ्चविधं कासं श्वासञ्चैव सुदारुणम् ॥
कफवातामयानुग्रानानाहं विड्विवद्धताम् ।
अग्निमान्द्यारुचिं शोथमुदरं पांडुकामलाम् ॥
रसायनी च वृष्या च बलवर्णप्रसादनी ।
मधुरं बृंहणं वृष्यं मत्स्यं मांसञ्च जाङ्गलम् ॥
घृतपक्वं सदाभक्ष्यं रुक्षं तीक्ष्णं विवर्जयेत् ।

( आर्द्रकरसेनभक्षणम ) ( भै० र० पृ० ३०४ )

चन्द्रामृत रसः

त्रिकटु त्रिफला चव्यं धान्यजीरकसैन्धवम् ।

प्रत्येकं तोलकं ग्राह्यं छागी क्षीरेण गोलयेत् ।
रसगन्धकलौहानां प्रत्येक कार्षिकं शुभम् ।
टङ्कनस्य पलं दत्वा मरिचस्य पलार्द्धकम् ॥
नव गुञ्जा प्रमाणेन वटिकां कारयेद्भिषक् ।
प्रातः काले शुचिर्भूत्वा चिन्तयित्वामृतेश्वरीम् ॥
एकैकां वटिकां खादेद्रक्तोत्पलरसप्लुता ।
नीलोत्पलरसेनापि कुलत्थस्य रसेन वा ।
पिप्पल्या मधुना वापि शृङ्गवेररसेन वा ॥
हन्ति पञ्चविधं कासं वातपित्तसमुद्भवम् ॥
वातश्लेष्मोद्भवं दोषं पित्तश्लेष्मोद्भवं तथा ॥
वातिकं पैत्तिकञ्चैव नानादोष समुद्भवम् ।
रक्तनिष्ठीवनञ्चापि ज्वरं श्वाससमन्वितम् ।
तृष्णां दाहं भ्रमं हन्ति जठराग्निप्रदीपनी ।
बलवर्णकरी ह्येषा प्लीहगुल्मोदरापहा ॥
आनाह कृमि हृत्पांडु जीर्णज्वरविनाशिनी ।
इयं चन्द्रामृतानाम चन्द्रनाथेन निर्म्मिता ॥
वासा गुडुची भार्गीच मुस्तकं कण्टकारिका ।
सेवनान्ते प्रकर्तव्या गुटिका वीर्य्यधारिणी ॥

( भैषज्यरत्नावली ३०१ )

चूड़ामणि रसः

द्विनिष्कं रससिन्दूरं तदर्द्धं हेम जारितम् ।
निष्कद्वयं गन्धकञ्च मर्दयेच्चित्रकद्रवैः ॥
कुमारिकाद्रवैर्यामं छागदुग्धैस्त्रियामकम् ।
मुक्ताविद्रुमवङ्गानां निष्कं निष्कं विमिश्रयेत् ॥

गोलकं पूरयेद्भाण्डे रुद्ध्वा गज पुटे पचेत् ।
स्वाङ्गशीतं विचूर्ण्याथ भक्षयेद्रक्तिका द्वयम् ॥
मधुना क्षयरोगघ्नं वात पित्त समुद्भवम् ।
अजाघृतञ्चानुपिबेत् शर्करामधु संयुतम् ॥
( भै० र० पृ० २६५ )

महामृगाङ्कोरसः

निरुत्थभस्म सौवर्णं द्विगुणं भस्म सूतकम् ।
त्रिगुणंभस्म मुक्तोत्थं शुकपुच्छं चतुर्गुणम् ॥
मृतताप्यञ्च पञ्चांशं दद्यादत्र भिषक् सुधीः ।
सप्तभागं प्रवालञ्च रस तुल्यञ्च टङ्कणम् ॥
सर्वमेकत्र सम्मर्द्य त्रिदिनं निम्बवारिणा ।
तत्ततो गोलकं कृत्वा शोषयित्वा खरातपे ।
लवणैः पात्रमापूर्य तन्मध्ये गोलकं क्षिपेत् ।
तन्मुखञ्च मृदा रुद्ध्वा पचेद्याम चतुष्टयम् ॥
आकृष्य चूर्णितं शुद्धं प्रदेयं पूर्व भागिकम् ।
वज्रञ्च तदभावेतु वैक्रान्तं तत् समांशकम् ॥

महामृगाङ्कः खलु सिद्ध एष श्री नन्दिनाथप्रकटीकृतोऽयम् ।
वल्लोऽस्य सेव्यो मरिचाज्ययुक्तः सेव्योऽथवा पिप्पलिकासमेतः ॥

अत्रोपचाराः कर्तव्याः सर्वे क्षयगदोदिताः ।
वल्यं घृतञ्च भोक्तव्यं त्याज्यं शूले विरोधि यत् ।
यक्ष्माणं बहुरूपिणं ज्वरगणं गुल्मं तथा विद्रधिं ।
मन्दाग्निं स्वरभेद कासमरुचिं वान्तिञ्च मूर्च्छां भ्रमम् ॥
अष्टावेव महागदान् गदगणान् पांड्वामयं कामलां ।
पित्तार्त्ति समलग्रहान् बहुविधानन्यांस्तथा नाशयेत् ॥
( भै० र० पृ० २६३ )

राजमृगाङ्कोरसः

रसभस्मत्रयोभागा भागैकं हेमभस्मकम् ।
मृतताम्रस्य भागैकं शिला तालक गन्धकम् ॥
प्रतिभागद्वयं तत्राप्येकीकृत्य निधापयेत् ।
वराटी पूरयेत्तेन चाजाक्षीरेण टङ्कणम् ॥
पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डेन निरोधयेत् ।
शुष्कं गजपुटे पाच्यं चूर्णयेत्स्वाङ्ग शीतलम् ॥
रसोराज मृगाङ्कोऽयं चतुर्गुञ्जं क्षयापहम् ।
दशापिप्पलिकैः क्षौद्रमरिचकोनविंशतिः ॥
सघृतैर्दापयेद्वातपित्तश्लेष्मोद्भवे क्षये ।

( भै० र० पृ० २६२ )

मृगाङ्कोरसः

स्याद्रसेन समं हेम मौक्तिकं द्विगुणं ततः ।
गन्धकञ्च समं तेन रसपादन्तु टङ्कणम् ॥
सर्वं तद्गोलकं कृत्वा काञ्जिकेनावशोषयेत् ।
भाण्डे लवण पूर्णेऽथ पचेद्यामचतुष्टयम् ॥
मृगाङ्क संज्ञः सञ्ज्ञेयो रोगराज निकृन्तनः ।
गुञ्जा चतुष्टयंचास्य मरिचैर्भक्षयेद्भिषक् ॥
पिप्पली दशकैर्वाथ मधुना लेहयेद्बुधः ।
पथ्यं मुलघुमांसेन प्रायशोऽस्य प्रयोजयेत् ॥
दध्याज्यं गव्यतक्रं वा मांसमाजं प्रयोजयेत् ।
व्यञ्जनैर्घृतपक्वैश्च नातिक्षारैरहिंगुभिः ॥
वृन्ताकं तैलबिल्वादि कारवेल्लं च वर्जयेत् ।
स्त्रियं परिहरेद्दूरे कोपञ्चापि परित्यजेत् ॥

( भै० र० पृ० २६२ )

रसराजेन्द्रः

हिंगुलोत्थं रसं गन्धं केशराजाम्बुशोधितम् ।
रसार्द्धं हेम तारञ्च नागं हेमार्द्धकं तथा ॥
क्षिप्त्वा खल्लतले पश्चाद्वासाक्काथेन भावयेत् ।
काकमाच्याश्चित्रकस्य निर्गुण्ड्याः कुटजस्य च ॥
स्थलपद्मस्योत्पलस्य सप्तकृत्वो द्रवैः पृथक् ।
ततो रक्तिमिताः कुर्य्याद्वटीश्चण्डांशु शोषिता ॥
अन्त्रजान् निखिलान् रोगान् सर्वे दोषोद्भवांस्तथा ।
हन्त्ययं रसराजेन्द्रो मृगराजो यथा मृगान् ॥

( भै० र० पृ० २८२ )

महोदधिरसः

रसं गन्धं तथाहेम वज्रविद्रुममौक्तिकम् ।
गृहीत्वा समभागेन मर्दयेत् त्रिफलाम्बुना ॥
ततो रक्तिमिताः कुर्य्यात् वटीश्छायाप्रशोषिताः ।
एकैकां दापयेदासां यथा दोषानुपानतः ॥
रुद्धान्त्रत्वमन्त्रवृद्धिं तथान्यानन्त्रजान् गदान् ।
वातपित्तकफोत्थांश्च सर्वान् हन्ति महोदधिः ॥

( भै० र० पृ० २८२ )

नाराचरसः

सूतगन्धक तुल्यांशं मरिचं सूततुल्यकम् ।
टङ्कणं पिप्पली शुण्ठी द्वौ द्वौ भागौ विमिश्रयेत् ॥
सर्वतुल्यानि बीजानि दन्तीनां निस्तुषाणि च ।
स्नुहीक्षीरेण संयुक्तं मर्दयेद्दिवसत्रयम् ॥
नारिकेलोदरे स्थाप्यं महागाढाग्निना ततः ।
तत् कल्कं पाचयेत् क्षिप्रं खल्लयित्वा निधापयेत् ॥

तन्मध्य नाभिलेपेन राजयोग्यं विरेचनम् ।
वटिका लेपमात्रेण दशवारं विरेचयेत् ॥
तद्गन्ध घ्राणमात्रेण विरेको जायते ध्रुवम् ।
त्रिवृत् कृष्णाहरीतक्यो द्विचतुः पञ्चभागिकाः ॥
गुड़िका गुड़तुल्या सा विड्विबन्धगदापहा ।

(भै० र० पृ० २७६)

पञ्चाननरसः

पारदांशकतुत्थञ्च गन्धं जैपाल पिप्पली ।
आरग्वधफलान्मज्जा वज्रीक्षीरेण भावयेत् ॥
धात्रीरसयुतं खादेद्रक्तगुल्मप्रशान्तये ।
चिञ्चादलरसञ्चानु पथ्यं दध्योदनंहितम् ॥
वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलम् ।
न खादेच्चालुकं गुल्मी मधुराणि फलानि च ॥

(भै० र० पृ० २७८)

बृहद्गुल्मकालानलो रसः

अभ्रं लौहं रसं गन्धं टङ्कणं कटुकं वचाम् ।
द्विक्षारं सैन्धवं कुष्ठं त्र्यूषणं सुरदारु च ॥
पत्रमेलां त्वचं नागं खादिरंसारमेव च ।
गृहीत्वा समभागेन श्लक्ष्णं चूर्णं प्रकल्पयेत् ॥
जयन्ती चित्रकोन्मत्त केशराज दलं तथा ।
निष्पीड्य स्वरसं नीत्वा भावयेत् कुशलो भिषक् ॥
चतुर्गुञ्जा प्रमाणेन वटिकाः कारयेत्ततः ।
उत्थाय भक्षयेत् प्रातरनुपानं जलं पयः ॥
गुल्मं पञ्चविधं हन्ति यकृत् प्लीहोदराणि च ।
कामलां पाण्डुरोगञ्च शोथञ्चैव सुदारुणम् ॥

हलीमकं रक्तपित्तं मन्दाग्निमरुचिं तथा ।
ग्रहणीमार्दवं कार्श्यं जीर्णं च विषमज्वरम् ॥

( भै० र० पृ० २७६ )

चतुःसमलौहम्

अभ्रं गन्धं रसं लौहं प्रत्येकं संस्कृतं पलम् ।
सर्वमेतत् समाहृत्य यत्नतः कुशलो भिषक् ॥
आज्यपलद्वादशकं दुग्धे वत्सरसंख्यके ।
पक्त्वावतिर्पत्तत्र चूर्णं सुपूतं घनवाससा ॥
विडङ्गत्रिफलावह्नि त्रिकटूनां तथैव च ।
पिष्ट्वापलान्वितानेतान् तथा संमिश्रितान्नयेत् ॥
तत्तपिष्टं शुभे भाण्डे स्थापयेत्तु विचक्षणः ।
आत्मनः शोभने चाह्नि पूजयित्वा रविं गुरुम् ॥
घृतेन मधुना मद्यं भक्षयेन्माषकावधि ।
क्रमेण वर्द्धयेत् तच्च समाहित मनः सदा ॥
अनुपानञ्च दुग्धेन नारिकेलोदकेन वा ।
जीर्णान्ते हितशाल्यन्नः मुद्गमांसरसादिभिः ॥
रसायनाविरुद्धानि चान्यान्यपि च कारयेत् ।
हृच्छूलं पार्श्वशूलञ्चाप्यामवातं कटिग्रहम् ॥
गुल्मशूलं शिरःशूलं यकृत् प्लीहानमेव च ।
अग्निमान्द्यं क्षयं कुष्ठं कासं श्वासं विचर्चिकाम् ॥
अश्मरीं मूत्रकृच्छ्रञ्च योगेनानेन साधयेत् ।

( भै० र० पृ० २६७ )

शूलगजकेशरी

शुद्धसूतं द्विधा गन्धं यामकं मर्दयेत् दृढम् ।

द्वयोस्तुल्यं शुद्धताम्रं सम्पुटं तं निरोधयेत् ॥
ऊर्ध्वाधो लवणं दत्वा मृद्भाण्डे स्थापयेद्बुधः ।
रुद्ध्वा गजपुटं दत्वा स्वाङ्गशीतं समुद्धरेत् ॥
संपुटं चूर्णयेत् श्लक्ष्णं पर्णखण्डे द्विगुञ्जकम् ।
भक्षयेत् सर्वशूलार्तो हिंगुशुंठी सजीरकम् ॥
वचा मरिचजं चूर्णं कर्षमुष्णजलैः पिवेत् ।
असाध्यं साधयेच्छूलं श्रीशूलगजकेसरी ॥

( भै० र० पृ० २६५ )

रसमण्डूरम्

कुडवं पथ्याचूर्णं द्विपलं गन्धाश्मलौहकिट्टञ्च ।
शुद्धरसस्यार्द्धं पलं भृङ्गस्य रसं सकेशराजस्य ॥
प्रस्थोन्मितञ्च दत्वा पात्रे लौहेऽथ दण्डसंघृष्टम् ।
शुष्कं घृतमधुयुक्तं मृदितं स्थाप्यञ्च भाजने स्निग्धे ॥
उपयुक्तमेतदचिरान्निहन्ति कफपित्तजान् रोगान् ।
शूलं तथाम्लपित्तं ग्रहणीञ्च कामलामुग्राम् ॥

( भै० र० पृ० २५६ )

अम्लपित्तान्तकलौहः

मृतसूतार्कलौहानां तुल्यां पथ्यां विमर्दयेत् ।
माषमात्रं लिहेत् क्षौद्रैरम्लपित्तप्रशान्तये ॥

( भै० र० पृ० २४७ )

पञ्चानन गुटिका

शुद्धसूतपलार्द्धञ्च ततसमं शुद्धगन्धकम् ।
तयोस्तुल्यं ताम्रपत्रं लिप्त्वा मूषान्तरे क्षिपेत् ॥
आच्छाद्य पञ्चलवणैर्लिप्त्वा गजपुटे पचेत् ।
सिद्धं ताम्रं समादाय पलमेकं विचूर्णयेत् ॥

पारदस्य पलञ्चैकं गन्धकस्य पलं तथा ।
पुटदग्धस्य लौहस्य गगनस्य पलं पलम् ॥
यमानी शतपुष्पाच त्रिकटु त्रिफलापि च ।
त्रिवृता चविका दन्ती शिखरी जीरकद्वयम् ॥
एतेषां पलि कर्षभागैर्घण्टकर्णकमानकम् ।
ग्रन्थिकं चित्रकञ्चैव कुलिशानां पलार्द्धकम् ॥
आर्द्रकस्वरसैः पिष्ट्वा गुटिकां माषकोन्मिताम् ।
पञ्चाननवटी ख्याता सर्वरोगविनाशिनी ॥
अम्लपित्त महाव्याधि नाशनी च रसायनी ।
महाग्निकारिका चैषा परिणाम व्यथापहा ॥
शोथ पाण्डवामयानाह प्लीहगुल्मोदरापहा ।
गुरुवृष्यान्नपानानि पयो मांसरसाहिताः ॥

( भै० र० पृ० २४७ )

क्षुधावती गुटिका

रसायोगन्धकाभ्राणि त्र्यूषणं त्रिफला वचा ।
यमानी शतपुष्पाच चविका जीरकद्वयम् ॥
प्रत्येकं पलमेषान्तु घण्टकर्णं पुनर्नवा ।
माणकं ग्रन्थिकञ्चेन्द्र केशराज सुदर्शनी ॥
दण्डोत्पला त्रिवृद्दन्ती जामातृ रक्त चन्दनम् ।
भृङ्गापामार्ग कुलका मण्डूकञ्च पलार्द्धकम् ॥
आर्द्रकस्यरसेनाथ गुडिकांसंप्रकल्पयेत् ।
बादरास्थि समाञ्चैकां भक्षयित्वा पिबेदनु ॥
वारिभक्तजलञ्चैव प्रातरुत्थाय मानवः ।
वटी क्षुधावती नाम सर्वाजीर्णविनाशिनी ॥
अग्निञ्च कुरुते दीप्तं भस्मकञ्च नियच्छति ।

अम्लपित्तञ्च शूलञ्च परिणामकृतञ्च यत् ॥
तत्सर्वं शमयत्याशु भास्करस्तिमिरं यथा ।
मधुरं वर्जयेदत्र विशेषात् क्षीरशर्करे ॥

( मै० र० पृ० २४६ )

कृमिघातिनी गुड़िका

रसगन्धाजमोदानां कृमिघ्नब्रह्मबीजयोः ।
एकद्वित्रिचतुःपञ्च तिन्दोर्बीजस्य षट्क्रमात् ॥
संचूर्ण्य मधुना सर्वं गुड़िकां कृमिघातिनीम् ।
खादन् पिपासुस्तोयञ्च मुस्तानां कृमिशान्तये ॥
आखुपर्णी कषायं वा प्रपिबेत् शर्करान्वितम् ।

( भैषज्यरत्नावली २३६ )

कृमिकाष्ठानलोरसः

विशुद्धं पारदं गन्धं वङ्गतालं वराटकम् ।
मनःशिला कृष्णकाचं सोमराजी विडङ्गकम् ॥
दन्ती बीजञ्च जैपालं शिला टङ्कण चित्रकम् ।
कर्षमात्रन्तु प्रत्येकं बज्रीक्षीरेण मर्दयेत् ॥
कलायसदृशीं कृत्वा वटिकां भक्षयेत् ततः ।
क्रिमि काष्ठानलो नाम रसोऽयं परिनिर्मितः ॥
श्लेष्मिके श्लेष्मिपित्ते च श्लेष्मवाते च शस्यते ।

( रसेन्द्रसारसंग्रहे १६३ )

कर्पूररसः

हिंगुलमहिफेनञ्च मुस्तकेन्द्रयवं तथा ।
जातीफलञ्च कर्पूरं सर्वं संमर्द्य यत्नतः ॥
जलेन वटिका कार्या द्विगुञ्जा परिमाणतः ।

ज्वरातीसारिणो चैव तथातीसाररोगिणे ॥
ग्रहणीषट् प्रकारे च रक्तातीसार उल्बणे ।
( अत्र केचित् टङ्कणमप्येकभागमिच्छन्ति )

( भै० र० पृ० २३१ )

आनन्दभैरवो रसः

दरदं मरिचं टङ्कममृतं मागधीसमम् ।
श्लक्ष्णं पिष्ट्वा तु गुञ्जैकं रसमानन्दभैरवम् ।
लेहयेत् मधुना चानु कुटजस्य फलत्वचोः ।
चूर्णितं कर्षमात्रन्तु त्रिदोषोत्थातिसारजित् ॥
दध्यन्नं दापयेत् पथ्यं दध्याज्यं तक्रमेव वा ।
पिपासायां जलं देयं विजया च हितानिशि ॥

( भैषज्यरत्नावली पृ. २३० )

जातीफल रसः ।

पारदाभ्रकसिंदूरं गन्धं जातीफलं समम् ।
कुटजस्य फलञ्चैव धूर्त्तबीजानि टङ्कनम् ।
व्योषं मुस्ताभया चैव चूतबीजं तथैव च ।
बिल्वकं सर्ज्जबीजञ्चदाडिमीवल्कजीरकम् ॥
एतानि समभागानि निःक्षिपेत् खल्ल मध्यतः ।
विजयास्वरसेनैव मर्दयेत् श्लक्ष्णचूर्णितम् ॥
गुञ्जाफलप्रमाणान्तु वटिकां कारयेद्भिषक् ।
एकांकुटजमूलत्वक् कषायेण प्रयोजयेत् ।
आमातिसारं हरति कुरुतेवह्निदीपनम् ।
मधुना बिल्वशुण्ठेन रक्तग्रहणिकां जयेत् ॥

शुण्ठी धान्यक योगेन त्वातिसारं निहन्त्यसौ ।
जातीफलरसोयोग ग्रहणी गदहारकः ।

( भै० र०. पृ०. २३० )

हिरण्यगर्भपोट्टलीरसः ।

एकांशो रसराजस्य ग्राह्यो द्वौ हाटकस्य च ।
मुक्ताफलस्य चत्वारो भागाः षड् दीप्तनिस्वनात् ॥
त्र्यंशं बलेर्वराट्याश्च टङ्कणो रसपादिकः ।
पक्व निम्बुकतोयेन सर्वमेकत्र मर्दयेत् ॥
मूषामध्ये न्यसेत् कल्कं तस्य वक्त्रं निरोधयेत् ।
गर्त्तेऽरत्नि प्रमाणेन पुटेत्त्रिंशद्वनोपलैः ॥
स्वाङ्गशीतलतां ज्ञात्वा रसं मूषान्तरादरेत् ॥
ततः खल्लोदरे मर्द्य सुश्लक्ष्णं समुद्धरेत् ॥
एतस्यामृतरूपस्य दद्याद्गुञ्जा चतुष्टयम् ।
घृतमाध्वीकसंयुक्तमेकोनत्रिंशदूषणाः ॥
मन्दाग्नौ रोगसङ्घे च ग्रहण्यां विषमज्वरे ।
गुदांकुरे महाशूले पीनसे श्वासकासयोः ॥
अतिसारे ग्रहण्याञ्च श्वयथौ पाण्डुके गदे ।
सर्वेषु कोष्ठरोगेषु यकृत् प्लीहादिकेषु च ॥
वात पित्त कफोत्थेषु द्वन्द्वजेषु त्रिजेषु च ।
दद्यात् सर्वेषु रोगेषु श्रेष्ठमेतद्रसायनम् ॥

( भै० र० पृ० २२१ )

विजय पर्पटी, तत्रान्तरोक्ता ।

रसं वज्रं हेमतारं मौक्तिकं ताम्रमभ्रकम् ।
सर्वतुल्येन गन्धेन कुर्य्याद्विजयपर्पटीम् ॥
दुर्वारां ग्रहणीं हन्ति दुःसाध्यां बहुवार्षिकीम् ॥

आमशूलमतीसारं चिरोत्थमतिदारुणम् ।
प्रवाहिकां षडर्शांसि यक्ष्माणं सपरिग्रहम् ।
शोथं च कामलां पांडुं प्लीहगुल्म जलोदरम् ।
अष्टादशविधं कुष्ठं प्रमेहान् विषमज्वरान् ॥
चतुर्विधमजीर्णञ्च मन्दाग्नित्वमरोचकम् ।
जीर्णोऽपि पर्पटीं कुर्वन् वपुषा निर्मलः सुधीः ॥
जीवेद्वर्षशतं श्रीमान् बलीपलितवर्जितः ।
प्रातः करोति सततं नियतं द्विगुञ्जां ,
यस्तां स विन्दति तुलां कुसुमायुधस्य ।
आयुश्च दीर्घमनघं वपुषः स्थिरत्वं ,
हानिं बलीपलितयोरतुलं बलञ्च ॥
जराव्याधिसमाकीर्णं विश्वं दृष्ट्वा पुरा हरः ।
चकार पर्पटीमेतां यथा नारायणः सुधाम् ॥

( भै० र० पृ० २२० )

विजय पर्पटी

गन्धकं क्षुद्रितं कृत्वा भाव्यं भृङ्गरसेन तु ।
सप्तधा वा त्रिधा वापिपश्चाच्छुष्कं विचूर्णयेत् ॥
चूर्णयित्वायसे पात्रे कृत्वा वह्निगतं सुधीः ॥
द्रुतं भृङ्गरसे क्षिप्तं तत उद्धृत्य शोषयेत् ।
तञ्च गन्धं पलञ्चैकं गन्धार्द्धं शुद्धपारदम् ॥
सूतार्द्धं भस्म रौप्यञ्च तदर्द्धं स्वर्णभस्मकम ।
तदर्द्धं मृतवैक्रान्तं मौक्तिकञ्च विनिक्षिपेत ॥
एकीकृत्य ततः सर्वं कुर्य्यात् पर्पटिकां शुभाम् ।
लौहपात्रे समरसं मर्दितं कज्जलीकृतम ॥
बदराङ्गारवह्निस्थे लौहपात्रे द्रवीकृते

मयूरचन्द्रिकाकारं लिङ्गं वा यदि दृश्यते ।
मृदो न सम्यग्भङ्गः स्यात् मध्ये भङ्गश्च रूप्यवत् ।
खरे लघुर्भवेद्भङ्गो रूक्षः सूक्ष्मोऽरुणाच्छविः ।
मृदु मध्यौ तथा खाद्यौ खरस्त्याज्यो विषोपमः ।
जराव्याधि शताकीर्णं विश्वं दृष्ट्वा पुरा हरः ।
चकार पर्पटीमेतां यथा नारायणोऽमृतम् ॥
आदौ शङ्करमभ्यर्च्य द्विजातीन् प्रणिपत्यच ।
प्रभाते भक्षयेदेनां प्राक् रक्तिद्वय सम्मिताम् ॥
रक्तिकादिक्रमात् वृद्धिर्भक्ष्या नैव दशोपरि ।
आरोग्यदर्शनं यावत्तावत् ह्रासस्ततः परम् ॥
अजीर्णे भोजनं नैव पथ्यकाल व्यतिक्रमः ।
घृतसैन्धवधान्याकहिंगुजीरक नागरैः ॥
शस्यते व्यञ्जनं सिद्धं पित्ते स्याद्धम्ल माक्षिकम् ।
कृष्णमत्स्येन दुग्धेन मांसेन जाङ्गलेन च ॥
जाङ्गलेषु शशाच्छागौ मत्स्ये रोहित मद्गुरौ ।
पटोलपत्रञ्च तथा कृष्णावार्ताकु जालिका ॥
सुस्विन्न पूगैस्ताम्बूलैर्लाभे कर्पूरसंयुतैः ।
क्षुधाकाले व्यतिक्रान्ते यदि वायुः प्रकुप्यति ॥
झिञ्झिनीति शिरःशूले विरेके वमथौ तथा ।
तृष्णायाश्चाधिके पित्ते नारिकेलाम्बु निर्भयम् ॥
नारिकेल पयः पेयं द्विर्भक्ष्यं क्षीरमेव च ।
स्वप्ने शुक्रच्युतौ चैव चम्पकं कदलीदलम् ॥
वर्ज्यं निम्बादिकं शाकं शाकाम्लं काञ्जिकं सुराम् ।
कदलीफलपत्राद्रिं त्रपुषालावुकर्कटी ॥
कुष्मांडं कारवेल्लञ्च व्यायामं जागरं निशि ।

न पश्येत् न स्पृशेद् गच्छेत् स्त्रियं जीवितुमिच्छति ॥
यद्यौषधे स्त्रियं गच्छेत् कर्त्तव्या तु प्रतिक्रिया ।
दुर्वारांग्रहणीं हन्ति दुःसाध्यां बहुवार्षिकीम् ॥
आमशूलमतीसारं सामञ्चैव सुदारुणम् ।
अतिसारं षड्र्शांसि यक्ष्माणं सपरिग्रहम् ॥
शोथञ्च कामलां पाण्डुं प्लीहानञ्च जलोदरम् ।
पक्तिशूलं चाम्लपित्तं प्रमेहान् विषमज्वरान् ॥
वातपित्तकफोत्थांश्च ज्वरान् हन्ति सुदारुणान् ।
जीर्णोऽपि पर्पटीं कुर्वन् वपुषा निर्मलः सुधीः ॥
जीवेद्वर्षशतं श्रीमान् वलीपलित वर्जितः ।
( अतिदृष्टफलाह्येषा पर्पटी ) ( भै० र० पृ० २१८ )

पञ्चामृतपर्पटी ।

अष्टौ गन्धकतोलका रसदलं लौहं तदर्द्धं शुभम् ।
लौहार्द्धञ्च वराभ्रकं सुविमलं ताम्रं तथाभ्रार्द्धिकम् ॥
पात्रे लौहमये च मर्दनविधौ चूर्णीकृतञ्चैकतो ।
दर्व्या बादरवह्निनातिमृदुना पाकं विदित्वा दले ॥
रम्भाया लघु ढालयेत् पटुरियं पञ्चामृता पर्पटी ।
ख्याता क्षौद्रघृतान्विता प्रतिदिनं गुञ्जाद्वयं वृद्धितः ॥
लौहे मर्दनयोगतः सुविमलं भक्ष्यक्रिया लौहवत् ।
गुञ्जाष्टावथवा त्रिकं त्रिगुणितं सप्ताहमेवं भजेत् ॥
नानावर्णग्रहण्यामरुचिसमुदये दुष्ट दुर्नामकादौ ।
छर्द्यां दीर्घातिसारे ज्वरभवकलिते रक्तपित्ते क्षयेऽपि ॥
वृष्याणां वृष्यराशी बलिपलितहरा नेत्ररोगैकहन्त्री ।
तुन्दे दीप्तस्थिराग्निं पुनरपि नवकं रोगिदेहं करोति ॥
(रसदलं गन्धकार्द्धमित्यर्थः, दीर्घातिसारे चिरोत्थितातिसारे) (भै० र० पृ० २१८)

स्वर्णपर्पटी

रसोत्तमं पलं शुद्धं हेमतोलक संयुतम् ।
शिलायां मर्दयेत्तावत् यावदेकत्वमागतम् ॥

गन्धकस्य पलञ्चैकमयःपात्रे ततो दृढे ।
मर्दयेद्दृढपाणिभ्यां यावत्कज्जलतां व्रजेत् ॥

ततःपरं विधानज्ञः पर्पटीं कारयेत् सुधीः ।
रक्तिकादि क्रमेणैव योजयेदनुपानतः ॥

ग्रहणीं विविधां हन्ति शूलमष्टविधं तथा ।
सर्वज्वरापहन्त्री च नाम्नेयं स्वर्णपर्पटी ॥

( अत्र हेम्नोऽष्टभागित्वमुपलक्षणमिति प्रामाणिकाः )

( भै० र० पृ० २१८ )

लौहपर्पटी

समौ गन्धरसौ कृत्वा कज्जलीकृत्य यत्नतः ।
शुद्ध लौहस्य चूर्णन्तु रस तुल्यं प्रदापयेत् ॥

एकीकृत्य ततो यत्नात् लौहपात्रे प्रमर्दितम् ।
घृतप्रलिप्तदर्व्यान्तु स्वेदयेन्मृदुनाग्निना ॥

द्रवीभूतं समाहृत्य ढालयेत् कदलीदले ।
चूर्णीकृत्य सुखार्थाय पथ्यभुग्भिः प्रसेव्यते ॥

शीतोदकानुपानं वा क्वाथं वा धान्यजीरयोः ।
लौहेनपर्पटी ह्येषा भक्ष्या लोकस्य सिद्धिदा ॥

रक्तिकैकां समारभ्य वर्द्धयेद्रक्तिकां क्रमात् ।
सप्ताहं वा द्वयं वापि यावदारोग्यदर्शनम् ॥

सूतिकाश्च ज्वरश्चैव ग्रहणीमतिदुस्तराम् ।
आमशूलातिसारांश्च पाण्डुरोगं सकामलम् ॥
प्लीहानमग्निमान्द्यञ्च भस्मकञ्च तथैव च ।
आमवातमुदावर्त्तं कुष्ठान्यष्टादशैवतु ॥
एवमादींस्तथा रोगान्गराणि विविधानि च ।
हन्त्यनेन प्रयोगेण वपुष्मान् निर्मलः सुखी ।
जीवेद्वर्षशतं पूर्णं वलीपलितवर्जितः ॥
भोजनं रक्तशालीनां त्यक्त्वा शाकं विदाहि च ।
आमवात प्रकोपञ्च चिन्तनं मैथुनं तथा ॥
प्रातरुत्थाय संसेव्या विधिनायुःप्रवर्द्धिनी ।
( भैषज्य रत्नावली पृ० २१७ )

रसपर्पटी

श्रीविन्ध्यवासिपादान् नत्वा धन्वन्तरिञ्च सुरभिषजम् ।
रसगन्धक पर्पटिका परिपाटी पाटवं वक्ष्ये ॥
मग्नंरसे जयन्त्याः पश्चादेरंडऽसम्भूते ।
आर्द्रकरसे च सूतं पत्ररसे काकमाच्याश्च ॥
मग्नमुदितानुपूर्व्यामर्दनशुष्कं करेण गृह्णीयात् ।
प्रस्तरभाजनमध्ये शुद्धिरयं पारदस्योक्ता ॥
शुकपुच्छ समच्छायो नवनीत समद्युतिः ।
मसृणः कठिनः स्निग्धः श्रेष्ठो गन्धक इष्यते ।
कृत्वा भद्रं गन्धकमतिकुशलःक्षुद्र तण्डुलाकारम् ॥
तद्भृङ्गराजरसैरनन्तरं भावयेत् पात्रे ।
तदनु च शुष्कं कुर्य्यात् धूलिसमानञ्च सप्तधारौद्रे ॥
तदनु च शुष्कं चूर्णं कृत्वा विन्यस्य लौहिकामध्ये ।
निर्धूमबदरकाष्ठाङ्गारे न्यस्तं विलाप्य तैलसमम् ॥

पात्रस्थित भृङ्गराज रसमध्ये ढालयेन्निपुणः ।
तस्मिन् प्रविष्टमात्रं कठिनत्वं याति गन्धक चूर्णम् ॥
पुनरपि रौद्रे शुष्कं केतक रजसा समानतां नीतम् ।
शुद्धे सूते शोधित गन्धक चूर्णेन तुल्यता कार्या ॥
तावन्मर्दनमनयोर्यावन्न कणोऽपि दृश्यते सूते ।
पश्चात् कज्जल सदृशं चूर्ण लोहे स्थितं यत्नेन ॥
निर्धूमबदरकाष्ठाङ्गारे न्यस्तं विलाप्य तैल समम् ।
सद्यो गोमयनिहिते कदलदले ढालयेत् मृदुनि ॥
लोहस्थितमवशिष्टं कठिनं तन्न गृहीतव्यम् ।
पश्चात्पर्पटरूपा पर्पटिका कीर्त्यते लोकैः ॥
मयूर चन्द्रिकाकारं लिंगं यत्र तु दृश्यते ।
तत्र सिद्धं विजानीयाद्वैद्यो नैवात्र संशयः ॥
समुदित दिवसे कार्य्या भक्ष्या च पर्पटीमनुजैः ।
जीरक गुञ्जे हिंगोरर्द्धं खादेच्च वातले जठरे ॥
जीरक हिंगोरसेन त्वनुपानं सलिलधारया कार्य्यम् ।
रसगन्धक पर्पटिका भक्षणमात्रे तु नाम्भसः पानम् ॥
प्रथमं गुञ्जायुगलम् प्रतिदिनमेकैकं वृद्धितो भक्ष्यम् ।
दशगुञ्जापरिमाणान्नाधिकमदनीय मेकविंशति दिनानि ॥
वातातपकोपमनश्चिन्तनमाहारसमयवैषम्यम् ।
व्यायामश्चायासः स्नानं व्याख्यानमहित मत्यन्तम् ॥
पाके स्तोकं सर्पिर्जीरक धन्याकवेशवारैश्च ।
सिन्धूद्भवेन रन्धन मोदनधान्यानि शालयो भक्ष्या ॥
कुष्ठं वातिङ्गलफलमविद्धकर्णा च वास्तूकम् ।
अक्षतो मुद्गसहितःकदलदलसहितं पटोलञ्च ॥
क्रमुकफलश्रृंगवेरौ भक्ष्यौ शाकेषु काकमाचो च ।

लावक वर्त्तक तित्तिरि मयूर मांसञ्च हिततरं भवति ॥
मद्‌गुरो रोहित मीनावदनीयौ कृष्ण मत्स्याश्च ।
नीरक्षीरं व्यञ्जनमदनीयं पक्वकदलञ्च ॥
रम्भाफल दलवल्कल मूलानां वर्जनं कार्यम् ।
तिक्तं निम्बादिकमपि नाद्य नोष्णंतथान्नञ्च ॥
आनूपमांसजलचर पतत्रि पललञ्च सर्वथा त्याज्यम् ।
स्त्रीणां सम्भाषणमपि गुड़कश्च कृष्णमत्स्येषु ॥
नाम्लं न दधि शाकं पर्पट्या भक्षणे भक्ष्यम् ।
गुड़खण्ड शर्करादिक इक्षुविकारो न भक्ष्य इक्षुश्च ॥
न दलं न फलं न लताप्यदनीया कारवेल्लस्य ।
स्तोकं घृतमिह भक्ष्यं पथ्ये साकांक्षमुत्थानम् ॥
क्षुत्पीडायां भोजनमवश्यकार्यं महानिशायाञ्च ।
सम जल मिश्र पक्वं क्षीरं यद्वाधिकजल पक्वञ्च ॥
कथमपि भोजनसमयातिक्रमजाते ज्वरे विरेके च ।
वमने च नारिकेलसलिलं दुग्धञ्च पातव्यम् ॥
स्वप्ने जाते रमिते विरेकतः क्षीरमेवपातव्यम् ।
न ज्ञायते बुभुक्षा लक्ष्यात्तया प्रतीयते यदि वा ॥
अशक्ति भिन्निभिन्नमस्तकशूलाद्यैर्नूनमवधार्य्या ।
किं बहुवाच्यं रोगी यदा यदा भवति साकांक्षः ॥
पाययितव्यं दुग्धं तदा तदा निर्भयीभूय ।
विहिताकरणे चास्यामविहितकरणे च रोगाद्यज्ञानाम् ॥
व्यापत्तयोऽपि बहुधा दृष्ट्वा प्रामाणिकैर्बहुशः ।
तस्मादवधातव्यं भवितव्यं भोजने निपुणैः ॥
एवमियं क्रियमाणा भवति श्रेयस्करी नियतम् ।
अर्शो रोगं ग्रहणीं सामां शूलातिसारी च ॥

कामलपाण्डुव्याधिं प्लीहानश्चाति दारुणं हन्ति ।
गुल्म जलोदर भस्मकरोगं हन्त्यामवातांश्च ॥
अष्टादशैव कुष्ठान्यशेषशोथादि रोगांश्च ।
इयमम्लपित्तशमनी त्रिदोषदमनी क्षुधातिकमनीया ॥
अग्निनिमग्नमुदरे ज्वालाजटिलं करोत्याशु ।
रसगन्धकपर्पटिका त्वपवार्य्य व्याधिसंघातम् ॥
बलीपलित शून्यं पुरुषं दीर्घायुषं कुरुते ॥
(भैषज्यरत्नावली पृ० २१३)

बृहद्ग्रहणीकपाटः

तार मौक्तिक हेमानि सारश्चैकैक भागिकम् ।
द्विभागो गन्धकः सूतस्त्रिभागो मर्दयेदिमान् ॥
कपित्थस्वरसैर्गाढं मृगश्टङ्गे ततः क्षिपेत् ।
पुटेन्मध्ये पुटेनैव तत उद्धृत्य मर्दयेत् ॥
बलारसैः सप्तधैवमपामार्गरसैस्त्रिधा ।
लोध्र प्रतिविषा मुस्तधातकीन्द्रयवामृता ॥
प्रत्येकमेतत् स्वरसैर्भावना स्यात् त्रिधा त्रिधा ।
माषमात्रो रसोदेयो मधुना मरिचैस्तथा ॥
हन्ति सर्वानतीसारान् ग्रहणीं सर्वजामपि ।
कपाटो ग्रहणीरोगे रसोऽयं वह्निदीपनः ॥
(भैषज्यरत्नावली पृ० २१३)

बृहन्नृपवल्लभः

रसगन्धक लौहाभ्रं नागं चित्रञ्चमुस्तकम् ।
टङ्कं जातीफलं हिंगु त्वगेलावह्नि वङ्गकम् ॥
तेजपत्रमजाजी च यमानी विश्व सैन्धवम् ।
प्रत्येकं तोलकं चूर्णं तथा मरिच ताम्रयोः ॥

निरुत्थक मृतं हेम तथा माष चतुष्टयम् ।
आर्द्रकस्य रसेनैव धात्र्याश्च स्वरसैस्तथा ॥
भावयित्वा प्रदातव्यं चणमात्रं भिषग्वरैः ।
भक्षयेत् प्रातरुत्थाय पथ्यं भक्तेद्यथोचितम् ॥
अग्निमान्द्यमजीर्णञ्च दुर्नाम ग्रहणीं जयेत् ।
आमाजीर्णप्रशमनं सर्वरोग निसूदनम् ॥
नाशयेदौदरान् रोगान् विष्णुचक्रमिवासुरान् ।

( भैषज्यरत्नावली पृष्ठ २१२ )

पीयूषवल्ली रसः

सूतकं गन्धकं चाभ्रं तारं लौहं सटङ्कणम् ।
रसाञ्जनं माक्षिकञ्च शाणमेकं पृथक् पृथक् ।
लवङ्ग चन्दनं मुस्तं पाठा जीरकधान्यकम् ॥
समङ्गातिविषा लोध्रं कुटजेन्द्रयवं त्वचम् ।
जातीफलं विश्व निम्बं कनकं दाडिमच्छदम् ॥
समङ्गा धातकी कुष्ठं प्रत्येकं रससम्मितम् ।
भावयेत्सर्वमेकत्र केशराजरसैः पुनः ॥
चणकाभावटी कार्य्या छागी दुग्धेन पेषिता ।
अनुपानं प्रदातव्यं दुग्धविल्व समं गुडम् ।
अतिसारं ज्वरं तीव्रं रक्तातीसारमुल्बणम् ।
ग्रहणीं चिरजां हन्ति शोथं दुर्नामकं तथा ॥
आमशूलविबन्धघ्नं संग्रहग्रहणी हरम् ।
पिच्छामदोषं विविधं पिपासा दाहरोगकम् ॥
हृल्लासरोचकच्छर्दि गुदभ्रंशं सुदारुणम् ।
पक्वापक्वमतीसारं नानावर्णं सवेदनम् ॥

कृष्णारुणञ्च पीतञ्च मांसधावनसन्निभम् ।
प्लीहगुल्मोदरानाहं सूतिकारोगसङ्करम् ॥
असृग्दरं निहन्त्येव वन्ध्यानां गर्भदं परम् ।
कामलां पांडुरोगञ्च प्रमेहानपि विंशतिम् ॥
एतान्सर्वान्निहन्त्याशु मासार्द्धेनात्रसंशयः ।
पीयूषवल्ली वटिका अश्विभ्यां निर्मिता पुरा ॥

(भै० र० पृ० २१०)

वृद्धग्रहणीकपाटोरसः

टङ्कनक्षार गन्धाश्म रसं जातीफलं तथा ।
तथा खदिरसारञ्च जीरकं श्वेतधूनकम् ॥
कपिहस्तकबीजञ्च तथैव वकपुष्पकम् ।
एषां शाणं समादाय श्लक्ष्णाच्चूर्णानि कारयेत् ॥
विल्वपत्रक कार्पास फलं शालिञ्चदुग्धिका ।
शालिञ्चमूलं कुटजत्वचः कञ्चटपत्रकम् ।
सर्वेषां स्वरसेनैव वटिकां कारयेद्भिषक् ।
रक्तिकैकप्रमाणेन खादयेद्दिवसत्रयम् ।
दधिमस्तु ततः पेयं पलमात्र प्रमाणतः ।
अपि योगशताक्रान्तं ग्रहणीमुद्धतां जयेत् ॥
आमशूलं ज्वरं कासं श्वासं शोथं प्रवाहिकाम् ।
रक्तस्रावकरं द्रव्यं कार्यं नैवात्र युक्तितः ॥
कृष्णावार्त्ताकु मत्स्यञ्च दधितक्रञ्च शस्यते ॥
ज्ञात्वा वायोः कृतिं तत्र तैलं वारि प्रदापयेत् ।

(भैषज्यरत्नावली पृ० २०२)

रसकेसरी

रसगन्धौ समौ शुद्धौ दन्तीकाथेन मर्दयेत् ।
देवपुष्पं वारार्मितं रसपादं तथामृतम् ॥
माषमात्रञ्च तत्सेव्यं नागरेण गुडेन वा ।
सर्वारोचक शूलार्त्तिमामवातं विनाशयेत् ॥
विसूचीमग्निमान्द्यञ्च भक्तद्वेषं सुदारुणम् ।
रसो निवारयत्येष केशरी करिणं यथा ॥

( भैषज्य रत्नावली १७६ )

क्रव्यादरस:

पलं रसस्य द्विपलं बलेः स्याच्छुल्वायसी चार्द्ध पलप्रमाणे ।
विचूर्ण्य सर्वं द्रुतमग्नियोगादेरण्ड पत्रेऽथ निवेशनीयम् ॥
कृत्वाथ तां पर्पटिकां विदध्याल्लौहस्य पात्रे वरपूतमस्मिन् ।
जम्बीरजं पक्वरसं पलानि शतं नियोज्याग्नि महाल्पमात्राम् ॥
जीर्णे रसे भावितमेतदेतैः सुपञ्चकोलोद्भववारिपूरैः ।
सवेतसाम्लैः शतमत्र देयं समं रजण्कुनजं सुभृष्टम् ॥
विडं तदर्द्धं मरिचं समञ्च तत्सप्तधाद्रां चणकाम्ल वारा ।
क्रव्याद नामा भवति प्रसिद्धो रसस्तु मन्थानक भैरवोक्तः ॥
माषद्वयं सैन्धव तक्र पीतमेतस्य धन्यैः खलु भोजनान्ते ।
गुरूणि मांसानि पयांसि पिष्टीकृतानि सेव्यानि फलानि चैव ॥
मात्रातिरिक्तान्यपि सेवितानि यामद्वयाज्जारयति प्रसिद्धः ॥
कार्श्यस्थौल्यनिवर्हणो गरपरः सामातिनिर्नाशनो ॥
गुल्म प्लीह जलोदरादिशमनः शूलार्ति मूलापहः ।
वातश्लेष्म निवर्हणो ग्रहणिकातीसार विध्वंसनो ॥
वातग्रन्थि महोदरापहरणः क्रव्याद नामारसः ॥

( भैषज्यरत्नावली पृ० १७४ )

महाशंख वटी

कणामूलं वह्निदन्ती पारदं गन्धकं कणा ।
त्रिक्षारं पञ्चलवणं मरिचं नागरं विषम् ॥
अजमोदामृता हिंगु क्षारंतिन्तिडिकाभवम् ।
सञ्चूर्ण्य समभागन्तु द्विगुणं शङ्खभस्मकम् ॥
अम्लद्रवेण सम्भाव्य वटी कोलास्थिसम्मिता ।
अम्लदाडिमतोयेन लिम्पाकस्वरसेन च ॥
भक्षयेत्प्रातरुत्थाय नाम्ना शङ्खवटी शुभा ।
तक्रमस्तु सुरासीधु काञ्जिकोष्णोदकेन वा ।
शशैणादिरसेनैव रसेन विविधेन च ॥
मन्दाग्नि दीपयत्याशु बड़वाग्निसमप्रभम् ।
अर्शांसि ग्रहणीरोगं कुष्ठमेहभगन्दरम् ॥
प्लीहानमश्मरीं श्वासं कासं मेहोदरकृमीन् ।
हृद्रोगं पाण्डुरोगञ्च विबन्धानुदरेस्थितान् ॥
तान्सर्वान्नाशयत्याशु भास्करस्तिमिरं यथा ।

( भै० र० पृ० १७४ )

अग्निकुमारो रसः

रसेन्द्रगन्धौ सह टङ्कनेन समं विषं योज्यमिह त्रिभागम् ।
कपर्द शङ्खाविह नेत्रभागौ मरीचमत्राष्टगुणं प्रदेयम् ॥
सुपक्वजम्बीर रसेन घृष्टः सिद्धो भवेदग्निकुमार एषः ।
विसूचिकाजीर्णसमीरणार्ते दद्याद्द्विवल्लं ग्रहणीगदे च ॥

( भै० र० पृ० १७१ )

अजीर्णकण्टको रसः

शुद्धसूतं विषं गन्धं समं सर्वं विचूर्णयेत् ।
मरिचं सर्वतुल्यं स्यात् कण्टकार्याःफलद्रवैः ॥

मर्दयेत् भावयेत्सर्वमेकविंशति वारकम् ।
गुञ्जामात्रां वटीं खादेत् सर्वाजीर्णप्रशान्तये ॥
अजीर्णकण्टकः सोऽयं रसो हन्ति विसूचिकाम् ।

( भैषज्यरत्नावली पृ० १७० )

श्रीरामबाणरसः

पारदामृत लवंग गन्धकं भागयुग्ममरिचेन मिश्रितम् ।
जातिकोषफलमर्द्धभागिकं तिन्तिडाफलरसेन मर्दितम् ॥
माषमात्रमनुपानयोगतः सद्य एव जठराग्नि दीपनः ।
संग्रहग्रहणिकुम्भकर्णकं सामवातखरदूषणं जयेत् ॥
अग्निमान्द्यदशवक्त्रनाशनो रामबाण इव विश्रुतो रसः ।

( भैषज्यरत्नावली पृ० १६६ )

सुधानिधि रसः

सतं गन्धं माक्षिकं लौहचूर्णं सर्वं घृष्टं त्रैफलेनोदकेन ।
मूषामध्ये भूधरे तत्पुटित्वा दद्यात् गुञ्जां त्रैफलेनोदकेन ।
लौहे पात्रे गोपयः पाचयित्वा रात्रौ दद्याद्रक्तपित्त प्रशान्त्यैः ॥

( भैषज्यरत्नावली पृष्ठ १६१ )

वासासूतः

आटरूषनवपल्लव द्रवे पालिके सरसभस्म वल्लकम् ।
कर्षसम्मित मधु प्रयोजितं प्राश्य नाशयति रक्तपित्तकम् ॥

( गो० र० पृ० १५६ )

रक्तपित्तकुलकुठारो रसः

शुद्धपारदबलिप्रवालकं हेममाक्षिकभुजंगरङ्गकम् ।
मारितं सकलमेतदुत्तमं भावयेत्पृथक्पृथक्द्रवैस्त्रिशः ॥

चन्दनस्य कमलस्य मालतीकोरकस्य वृषपल्लवस्य च ।
धान्यवारशकणाशतावरीशाल्मलीवटजटामृतस्य च ॥
रक्तपित्तकुलकराडनाभिधो जायते रसवरोऽसृपित्तिनाम् ।
प्राणदो मधुवृषद्रवैरयं सेवितस्तु वसुकृष्णलैर्मितः ॥
नास्त्यनेन सममत्र भूतले भेषजं किमपि रक्तपित्तिनाम् ॥

( यो० र० पृ० १६६ )

सूतशेखर रसः

शुद्धं सूतं मृतं स्वर्णं टंकणं वत्सनागकम् ।
व्योषमुन्मत्तबीजं च गन्धकं ताम्रभस्मकम् ॥
चातुर्जातं शंखभस्म बिल्वमज्जा कचोरकम् ।
सर्वं समं क्षिपेत्खल्वे मर्द्यं भृंगरसैर्दिनम् ॥
गुञ्जामात्रां वटीं कृत्वा द्विगुञ्जं मधुसर्पिषी ।
भक्षयेद्रक्तपित्तघ्नो वान्तिशूलामयापहः ॥
पञ्च गुल्मान्पञ्चकासान् ग्रहण्यामयनाशनः ।
त्रिदोषोत्थातिसारघ्नः श्वासमन्दाग्निनाशनः ॥
उग्रहिक्कामुदावर्तं देहयाप्यगदापहः ।
मण्डलान्नात्र संदेहः सर्वरोगहरः परः ॥
राजयक्ष्महरः साक्षाद्रसोऽयं सूतशेखरः ।

( यो० र० पृ० ३७६ )

पारदादि चूर्णम्

रसबलिघनसारकोलमज्जामरकुसुमाम्बुधरप्रियङ्गुलाजाः ।
मलयजमगधात्वगेलपत्रं दलितमिदं परिभाव्य चन्दनाद्भिः ॥
मधुमरिचयुतं रजोऽस्य माषं जयति वमिं प्रबलां विलिह्य मर्त्यः ।

( योगरत्नाकर पृ० २०१ )

छर्द्यन्तकरसः

रसभस्म पलांशं स्यात्तत्पादः स्वर्णभस्म च ।
ताम्रं भुजङ्गवङ्गे च मौक्तिकं तत्समांशकम् ॥
तेषां सममयश्चूर्णमभ्रकं तत्समं भवेत् ।
तत्समं गन्धकं दत्वा बीजपूरार्द्रकाम्बुना ॥
सर्वं खल्वे विनिक्षिप्य मर्दयेत्त्रिदिनावधि ।
तत्कल्कं भावयेत्सप्त दिनान्यामलकद्रवैः ॥
पाश्चात्तन्मूलमूषायां रुद्ध्वा भाण्डे विनिक्षिपेत् ।
पांसुभिः परिपूर्याथ क्रमवृद्धेन वह्निना ॥
पचेद्यामत्रयं चुल्ल्यां स्वाङ्गशीतलमुद्धरेत् ।
ततः सर्वं समाकृष्य चूर्णयेत्पट्टगालितम् ॥
अजाजी दीप्यकं व्योषं त्रिफला कृष्णजीरकम् ।
कृमिशत्रुर्वराङ्गं च प्रत्येकं निष्कमानकम् ॥
ततः सर्वं चूर्णयित्वा योजयेत्पूर्वभस्मना ।
इत्थं पञ्चरसेऽनेन प्रोक्तश्छर्द्यन्तको रसः ॥
तत्तद्रोगहरैर्द्रव्यैर्दद्याद्वल्लप्रमाणतः ।
अम्लपित्तमसृक्पित्तं छर्दिं गुल्ममरोचकम् ॥
आमवातं च दुःसाध्यं प्रसेकच्छर्दिहृद्रुजम् ।
सर्वलक्षण संपूर्णं विनिहन्ति क्षयामयम् ॥
स्वस्थोचितो हितकरः सर्वेषाममृतोपमः ॥

(यो. र. पृ. २०१)

रसादिगुटिका

रसरजतगुटीं पटीयसीं यो वदनसरोरुहमध्यगां दधाति ।
स जयति तृषितस्तृषां मनुष्यो भृशमघपुञ्जमिव त्रिमार्गगाम्भः ॥

(यो. र. पृ. २०५)

रसादिचूर्णम्

रसगन्धककर्पूरैः शैलोशीरमरीचकैः ।
ससितैः क्रमवृद्धैश्च सूक्ष्मं कृत्वा त्वहर्मुखे ॥
त्रिगुञ्जाप्रमितं खादेत्पिवेत्पर्युषिताम्बु च ।
भृषं तृषां निहन्त्येवमश्विभ्यां च प्रकाशितम् ॥

(यो. र. पृ. २०५)

त्रिपुरसुन्दरोरसः

सिन्दूरमभ्रंत्वथ हेममाक्षिकं मुक्ताफलं हेम च तुल्यभागिकम् ।
कन्याम्बुना मर्दय सप्तवासरान् गुञ्जाप्रमाणां वटिकां विधेहि च ॥
रसोत्तमस्यास्य निषेवणान्नर आमाशयोत्थामय रोग संघतः ।
गत्वा विमुक्तिं वलवीर्य्य संयुतो मेधान्वितः सौम्यवपुश्च जायते ॥
अन्नपानादिकं सर्वं सुजरं यच्च पोषणम् ।
आमाशय गदे सेव्यं दुर्जरञ्च विवर्जयेत् ॥

(भै. र. पृ. १५०)

सुरेन्द्राभ्रवटी

अभ्रं सहस्रशो दग्धं रसं दरदसम्भवम् ।
केशराजाम्भसा शुद्धं गन्धकं हीरकं तथा ॥
विद्रुमं मौक्तिकं हेम रौप्यं माक्षिकमेव च ।
कान्तलौहञ्च सम्मर्द्य विधिना वह्निवारिणा ॥
वल्लमात्रां वटीं कृत्वा छायायां परिशोषयेत् ।
एकैकां योजयेत्प्राज्ञो यथादोषानुपानतः ॥
क्लोमरोगविनाशाय वह्नेः सन्धुक्षणाय च ।
नसोऽस्ति रोगो लोकेऽस्मिन् यमियं न विनाशयेत् ॥
यो यः समाश्रयेद्व्याधिः क्लोम्नि तं तमवेक्ष्य च ।
क्रियां संसाधयेद्वैद्यो यथादोषं यथाबलम् ॥

अनुग्राण्यन्नपानानि क्लोमामयनिपीडितः ।
सेवेतोग्राणि सर्वाणि यत्नतः परिवर्जयेत् ॥

( भै. र. पृ. १४६ )

जलोदरारिरसः

रसेन गन्धं द्विगुणं शिला च निशा च बीजं जयपालकस्य ।
फलत्रयं त्र्यूषणकञ्च चित्रं सर्वं विचूर्ण्यापि विभावयेच्च ॥
दन्तीस्नुहीभृङ्ग रसे पृथक् च सम्भाव्य संशोष्य च सप्तवारान्
वयो बलं वीक्ष्य तथा ददीत जाते विरेके च ददीत पथ्यम् ॥
अल्पं सतक्रं शिशिरानुशायि जाते बले तत्पुनरेव दद्यात् ।
तक्रेण रोगः समुपैति शान्ति सिद्धो रसो नाम जलोदरारिः ॥

( भै० र० पृ० १४४ )

वैद्यनाथवटी ( दधिवटी )

पक्वेष्टिका हरिद्राभ्यामागारधूमकेन च ।
शोधितं सूतकं ग्राह्यं तोलकं तुलया धृतम् ॥
भृंगराजरसैः शुद्धं गन्धकं सततुल्यकम् ।
हरितालं विषं तुत्थमेलवालुकताम्रकम् ॥
खर्परं माक्षिकं कान्तं सर्वमेकत्र कारयेत् ।
सर्वार्द्धा कज्जली ग्राह्या भावयेच्च पुनः पुनः ॥
सिन्धुवाररसे चैव ज्योतिष्मत्या रसे तथा ।
रसेऽपराजितायाश्च जयन्त्याः स्वरसे तथा ॥
रक्तचित्रकमूलोत्थे रसे च परिभावयेत् ।
वटिकां सर्षपाकारां योजयेत् कुशलोभिषक् ॥
ततः सप्तवटीर्दद्यादुष्णेन वारिणा सह ।
अनुपानञ्चकर्तव्यं कज्जल्याःकणाया सह ॥
सन्निपातज्वरे चैव सशोथे ग्रहणीगदे ।

पाण्डुरोगेऽग्निमान्द्ये च विविधे विषमज्वरे ॥
शुक्रमज्जगते दद्यान्नतु कासे कदाचन ।
नित्यं दध्ना च भोक्तव्यं सिता नित्यं तथैव च ॥
स्नातव्यं ह्यभयान्नित्यं वयोदोषानुसारतः ।
अलवणं वारिहीनं दधिपथ्यं सदा भवेत् ॥
वैद्यनाथवटीनाम्ना वैद्यनाथेन निर्मिता ॥

(भै० र० पृ० १३६)

शोथकालानलोरसः

चित्रं कुटजबीजञ्च श्रेयसी सैन्धवं तथा ।
पिप्पली देवपुष्पञ्च सजातीफल टङ्कनम् ॥
लौहमभ्रं तथा गन्धं पारदेनैव मिश्रितम् ।
एतेषां कर्ष मात्रेण वटीं गुञ्जामितां शुभाम् ॥
भक्षयेत्प्रातरुत्थाय कोकिलाक्षरसेन तु ।
ज्वरमष्टविधं हन्ति साध्यासाध्यमथापि वा ॥
कासं श्वासं तथा शोथं प्लीहानं हन्ति दुस्तरम् ।
अवश्यं नाशयेच्छोथं कर्दमं भास्करो यथा ॥
शोथकालानलो नाम रोगानीकविनाशनः ।

(भै० र० पृ० १३३)

दुग्धवटी

अमृतं धूर्तबीजञ्च हिंगुलञ्च समं समम् ।
धूर्तपत्ररसेनैव मर्दयेद्याममात्रकम् ॥
मुद्गोपमां वटीं कृत्वा दुग्धेन सह पाययेत् ।
दुग्धेन भोजयेदन्नं वर्जयेल्लवणं जलम् ॥
शोथं नानाविधं हन्ति पाण्डुरोगं सकामलम् ।

सेयं दुग्धवटी नाम्ना गोपनीया प्रयत्नतः ॥

( भै० र० पृ० १३५ )

आनन्दोदयोरसः

पारदं गन्धकं लौहमभ्रकं विषमेव च ।
समांशं मरिचं चाष्टगुणं टङ्कश्चतुर्गुणम् ॥
भृङ्गराजरसैः सप्त भावनाश्चाम्लदाडिमैः ।
गुञ्जाद्वयं पर्णखण्डे खादेत्सायं निहन्ति च ॥
वातश्लेष्मभवान् रोगान् मन्दाग्नि ग्रहणीं ज्वरान् ।
अरुचिं पाण्डुताञ्चैव जयेदचिरसेवनात् ॥
नष्टमग्निं करोत्येष कालभास्करतेजसम् ।
पर्वतोऽपिहि जीर्य्येत प्राशनादस्य देहिनः ॥
गुर्वन्नमम्लमाषञ्च भक्षणादेव जीर्य्यति ।

( भै० र० पृ० १२५ )

चन्द्रसूर्यात्मकोरसः

सूतकं गन्धकं लौहमभ्रकञ्च पलं पलम् ।
शङ्खटङ्कवराटञ्च प्रत्येकार्द्धपलं हरेत् ॥
गोक्षुरबीज चूर्णञ्च पलैकं तत्रदीयते ।
सर्वमेकीकृते चूर्णं वाष्पयन्त्रे विभावयेत् ॥
पटोलं पर्पटं भार्गी विदारी शतपुष्पिका ।
कुण्डलीदरिडनीवासाकाकमाचीन्द्रवारुणी ॥
वर्षाभूः केशराजश्च शालिञ्ची द्रोणपुष्पिका ।
प्रत्येकार्द्ध पलैर्द्रावैर्भावयित्वा वटीं चरेत् ॥
चतुर्दश वटीः खादेच्छागीदुग्धानुपानतः ।
गहनानन्दनाथोक्तश्चन्द्रसूर्यात्मको रसः ॥
हलीमकं निहन्त्याशु पाण्डुरोगञ्च कामलाम् ।

जीर्णज्वरं सविषमं रक्तपित्तमरोचकम् ॥
शूलं प्लीहोदरानाहमष्ठीलागुल्म विद्रधीन् ।
शोथं मन्दानलं कासं श्वासं हिक्कां वमिं भ्रमम् ॥
भगन्दरोपदंशौ च दद्रुकण्डूव्रणापचीः ।
दाहं तृष्णामुरुस्तम्भमामवातं कटीग्रहम् ॥
युक्त्या मद्येन मण्डेन मुद्गयूषेण वारिणा ।
गुडूचीत्रिफलावासाक्काथ नीरेण वा क्वचित् ॥

( भैषज्य रत्नावली पृष्ठ १२२)

बृहल्लोकनाथोरसः

शुद्धसूतं द्विधा गन्धं खल्ले कुर्य्याच्च कज्जलम् ।
सूततुल्यं जारिताभ्रं मर्द्दयेत्कन्यकाम्बुना ॥
ततो द्विगुणितं दद्यात्ताम्रं लौहं प्रयत्नतः ।
सूतान्नवगुणं देयं बराटीसंभवं रजः ॥
काकमाचीरसेनैव सर्वं तद्गोलकीकृतम् ।
ततो गजपुटे पच्यात् स्वाङ्गशीतं समुद्धरेत् ॥
शिवं संपूज्य यत्नेन द्विजातीन् परितोष्य च ।
भक्षयेदस्य चूर्णस्य द्विगुञ्जं मधुना सह ॥
प्लीहानमग्रमांसञ्च यकृतं सर्वरूपिणम् ।
जीर्णज्वरं तथा गुल्मं कामलां हन्ति दारुणाम् ॥

( भैषज्यरत्नावली, पृष्ठ ११० )

प्लीहारिरसः

पारदं गन्धकं टङ्कं विषं व्योषं फलत्रिकम् ।
तोलकस्य समोपेतं जैपालञ्च तदर्द्धकम् ॥

किंशुकस्य रसेनैव याममात्रन्तु मर्दयेत् ।
गुञ्जामात्रां वटीं कृत्वा छायायां शोषयेत्ततः ॥
वटिकैका प्रदातव्या शृङ्गवेर रसेन च ।
गुदांकुरे गुल्मशूले प्लीहशोथे कफात्मके ।
उदावर्ते वातशूले श्वासकासज्वरेषु च ॥
रसः प्लीहारिनामायं कोष्ठामयविनाशनः ॥

( भैषज्यरत्नावली पृ० १०७ )

कनकसुन्दरो रसः

हिंगुलं मरिचं गन्धं पिप्पली टङ्कनं विषम् ।
कनकस्य च बीजानि समांशं विजयाद्रवैः ॥
मर्दयेत् याममात्रन्तु चणमात्रा वटी कृता ।
भक्षणाद् ग्रहणीं हन्ति रसः कनकसुन्दरः ॥
अग्निमान्द्यं ज्वरं तीव्रमतीसारञ्च नाशयेत् ।
पथ्यं दध्योदनं दद्यात् यद्वा तक्रौदनं चरेत् ॥

( भै० र० पृ० १०१ )

सिद्धप्राणेश्वरो रसः

गन्धेशाभ्रं पृथग्वेद भागमन्यच्च भागिकम् ।
सर्जिटङ्कयवक्षाराः पञ्चैव लवणानि च ॥
वराव्योपेन्द्रबीजानि द्विजीराग्नि यमानिकाः ।
सहिंगु बीजसारञ्च शतपुष्पा सुचूर्णिता ॥
सिद्धप्राणेश्वरः सूतः प्राणिनां प्राणदायकः ।
माषैकं भक्षयेदस्य नागवल्लीदलैर्युतम् ॥
उष्णोदकानुपानञ्च दद्यात्तत्रपलत्रयम् ।
ज्वरातिसारेऽतिसतौ केवले वा ज्वरेऽपि च ॥

घोरे त्रिदोषजे रोगे ग्रहण्यामसृगामये ।
वातरोगे च शूले च शूलेचपरिणामजे ॥

( भै० र० पृ० १०० )

ज्वरहरी रसकज्जली

कण्टकारी सिन्धुवारस्तथा पूतिकरञ्जकम् ।
एतेषां रसमादाय कृत्वा खर्परखंडके ॥
प्रक्षेप्यं गन्धकं तत्र ज्वालं मृद्वग्निना दहेत् ।
गन्धके स्नेहता पन्ने तत्सम पारदं क्षिपेत् ॥
मिश्रीकृत्य ततो द्वाभ्यां द्रुतं तमवतारयेत् ।
आमर्दयेत्तथा तत्तु यथा स्यात् कज्जलप्रभम् ॥
ततस्तु रक्तिकामस्य माषकं जीरकस्य च ।
माषैकं लवणस्यापि पर्णे कृत्वा निधापयेत् ॥
ज्वरे त्रिदोषजे घोरे जलमुष्णं पिवेदनु ।
छर्द्यां शर्करयाद्द्यात्सामे दद्यात्तथा गुडम् ॥
क्षये छागभवं क्षीरं प्रदद्यादनुपानकम् ।
रक्तातिसारे कुटजमूलवल्कलजं रसम् ॥
रक्तवान्तौ तथा दद्यादुदुम्बर भवं जलम् ।
सर्वव्याधिहरश्चायं गन्धकः कज्जलीकृतः ॥
आयुर्वृद्धिकरश्चैव मृतश्चापि प्रवोधयेत् ।

( भै० र० पृ० ८६ )

लक्ष्मीविलासो रसः (नारदीयः)

पलं कृष्णाभ्रचूर्णस्य तदर्द्धौ रसगन्धकौ ।
तदर्द्धं चन्द्रसंज्ञस्य जातीकोषफले तथा ॥
वृद्धदारक बीजञ्च वीजं धुस्तूरकस्य च ।

त्रैलोक्यविजयाबीजं विदारी मूलमेव च ॥
नारायणी तथा नागबला चातिबला तथा ।
बीजं गोक्षुरकस्यापि नेचुलं बीजमेव च ॥
एतेषां कार्षिकं चूर्णं पर्णपत्ररसैः पुनः ।
संपिष्य वटिका कार्य्या त्रिगुञ्जाफलमानतः ॥
निहन्ति सन्निपातोत्थान् गदान् घोरांश्चतुर्विधान् ।
वातोत्थान् पैत्तिकांश्चैव नास्त्यत्र नियमः क्वचित् ॥
कुष्ठमष्टादशाख्यञ्च प्रमेहान् विंशितिं तथा ।
नाड़ीव्रणं व्रणंघोरं गुदामयभगन्दरम् ॥
श्लीपदं कफवातोत्थं रक्तमांसाश्रितञ्च यत् ।
मेदोगतं धातुगतं चिरजं कुलसंभवम् ॥
गलशोथमन्त्रवृद्धिमतीसारं सुदारुणम् ।
आमवातं सर्वरूपं जिह्वास्तम्भं गलग्रहम् ॥
उदरं कर्णनासाक्षि मुखवैकृतमेव च ।
कासपीनसयक्ष्मार्शः स्थौल्यदौर्गन्ध्यनाशनः ॥
सर्वशूलं शिरःशूलं स्त्रीणां गदनिसूदनम् ।
वटिकां प्रातरेकैकां खादेन्नित्यं यथाबलम् ॥
अनुपानमिहप्रोक्तं मांसपिष्टं पयोदधिः ।
वारिभक्तं सुरासीधु सेवनात् कामरूपधृक् ॥
वृद्धोऽपि तरुणस्पर्द्धी न च शुक्रस्य संक्षयः ।
न च लिङ्गस्य शैथिल्यं न केशायान्ति पक्वताम् ॥
नित्यं स्त्रीणां शतं गच्छन् मत्तवारण विक्रमः ।
द्विलक्षयोजनीदृष्टिर्जायते पौष्टिकः परः ॥
प्रोक्तः प्रयोगराजोऽयं नारदेन महात्मना ।
रसो लक्ष्मीविलासस्तु वासुदेवे जगत्पतौ ॥

अभ्यासाद्यस्य भगवान् लक्ष नारीषु वल्लभः ॥

( भै० र० पृ० ८२ )

श्लेष्मशैलेन्द्र रसः

गन्धकं पारदं चाभ्रं त्र्यूषणं जीरकद्वयम् ।
शटी शृङ्गी यमानी च पुष्करं रामठं तथा ॥
सैन्धवं यावशूकञ्च टङ्कनं गजपिप्पली ।
जातीकोषाजमोदा च लौहं यासलवङ्गकम् ॥
धुस्तूरबीजं जैपालं कट्फलं चित्रकं तथा ।
प्रत्येकं कार्षिकं चैषां श्लक्ष्णचूर्णं प्रकल्पयेत् ॥
पाषाणे विमले पात्रे घृष्टं पाषाणमुद्गरैः ।
विल्वमूलरसं दत्वा चार्कचित्रक दन्तिकाः ॥
शिखरी काञ्जिका बासा निर्गुण्डी गणिकारिका ।
धुस्तूरं कृष्णजीरञ्च पारिभद्रक पिप्पली ॥
कण्टकार्य्यार्द्रयोश्चैव मूलान्येतानि दापयेत् ।
एषां मूलरसं दत्वा घृष्टमातपशोषितम् ॥
गुञ्जाप्रमाणां वटिकां कारयेत् कुशलो भिषक् ।
चतुर्विधवटीं खादेन्नित्यमार्द्रकवारिणा ॥
उष्णतोयानुपानेन श्लेष्मव्याधिं व्यपोहति ।
विंशतिं श्लैष्मिकांश्चैव शिरोरोगांश्च दारुणान् ॥
प्रमेहां विंशतिञ्चैव पञ्चगुल्मनिसूदनम् ।
उदराण्यन्त्रवृद्धिञ्चाप्यामवातं विनाशनम् ।
पञ्चपाण्ड्वामयान् हन्ति कृमिस्थौल्यामयापहम् ।
सोदावर्तं ज्वरं कुष्ठं गात्रकण्ड्वामयापहम् ॥
यथाशुष्केन्धने बह्निस्तथा वह्निविवर्द्धनः ।
श्लेष्मामयि कृपाहेतो रसेन्द्रो मुनिभाषितः ॥

श्लेष्मशैलेन्द्रको नाम रसेन्द्रगुटिका स्मृता ॥

( भै० र० पृ० ८१ )

वसन्तमालती रसः

स्वर्णं मुक्ता दरद मरिचं भागवृद्ध्या प्रदिष्टम् ।
खर्परात्पौ प्रथममखिलं मर्दयेत् प्रक्षणेन ॥
यावत् स्नेहो व्रजति विलयं निम्बुनीरेण तावत् ।
गुञ्जाद्वन्द्वं मधुचपलया मालती प्राग्वसन्तः ॥
सेवितोऽयं हरेत्तूर्णं जीर्णञ्च विषमज्वरम् ।
व्याधीनन्यांश्च कासादीन् प्रदीप्तं कुरुतेऽनलम् ॥

( भैषज्यरत्नावली पृ० ८१ )

नासाज्वरे आह्वारिरसः

क्षुद्रैला साभया कृष्णा लौहाभ्रखर्पराणि च ।
समभागं प्रकर्त्तव्यं द्विभागः पारदो मतः ॥
सर्वमेकत्र संमर्द्य द्रोणपुष्पी रसेन च ।
वल्लमात्रं प्रदातव्यं पुनर्नवरसैर्युतम् ॥
प्लीहानं यकृतं शोथमग्निमान्द्यमरोचकम् ।
नासाज्वरे विशेषेण सर्वञ्च विषमज्वरम् ॥
आह्वारि रसो ह्येष नाशयेदविकल्पतः ।

( प्रकीर्ण )

कल्पतरु रसः

रसं गन्धं विषं ताम्रं समभागं विचूर्णयेत् ।
भावयेत् पञ्चभिः पित्तैः क्रमशः पञ्चवासरान् ॥
निर्गुण्डीस्वरसेनैव मर्दयेत् सप्तवासरान् ।
आर्द्रकस्य रसेनैव भावयेच्च त्रिधा पुनः ।

सर्षपाभा वटीकार्या छायया परिशोषिता ॥
ततः सप्तवटीर्योज्या यावन्न त्रिगुणा भवेत् ।
वयोऽग्नि दोषकं बुद्ध्वा प्रयोज्या भिषजां वरैः ॥
अनुपानं चोष्णजलं कज्जली पिप्पली युतम् ।
पानावशेषे प्रस्वाप्य वस्त्रैराच्छादयेन्नरम् ॥
घर्माभ्यागमनं यावत्ततो रोगात् प्रमुच्यते ।
रोगिणं स्वापयित्वातु भोजयेत् ससितं दधि ॥
एष कल्पतरुर्नाम रसः परमदुर्लभः ।
असाध्यं चिरकालोत्थं जीर्णञ्च विषमज्वरम् ॥
हन्तिज्वरातिसारौ च ग्रहणीं पाण्डुकामलाम् ।
न देयः श्वासकासे च शूलयुक्ते नरे तथा ॥
गोपनीयः प्रयत्नेन न देयो यस्यकस्यचित् ।

( भै० र० पृ० ७६ )

ज्वरशूलहरो रसः

रस गन्धकयोः कृत्वा कज्जलीं भाण्डमध्यगाम् ।
तत्राधोवदनां ताम्रपात्रीं संरुध्य शोषयेत् ॥
पादांगुष्ठप्रमाणेन चुल्ल्यां ज्वालेन तां दहेत् ।
यामद्वयं ततस्तत्स्थं रसपात्रं समाहरेत् ॥
चूर्णयेद्रक्तियुगलं तृतीयं वा विचक्षणः ।
ताम्बूलीदल योगेन दद्यात् सर्व्वज्वरेष्वमुम् ॥
जीरसैन्धव संलिप्त वक्त्राय ज्वरिणे हितम् ।
स्वेदोद्गमो भवत्येव देवि सर्वेषु पाप्मसु ॥
चातुर्थिकादीन् विषमान्नवमागामिनं ज्वरम् ।
साधारणं सन्निपातं जयत्येव न संशयः ॥

( भैषज्यरत्नावली पृ० ७८ )

षडाननो रसः

आरं कांस्यं मृतं ताम्रं दरदं पिप्पली विषम् ।
तुल्यांशं मर्दयेत् खल्ले याममङ्क्रिन्नोद्भवा रसैः ॥
गुञ्जामात्रं रसं देयं गुञ्जामात्रं लिहेत्सदा ॥
ज्वरे मन्दानले चैव बातपित्तज्वरेषु च ।
ज्वरे वैषम्य तरुणे ज्वरेर्जीर्णे विशेषतः ॥
मुद्गान्नं मुद्गयूषं वा तक्रभक्तञ्च केवलम् ।
नारिकेलोदकं देयं मुद्गपथ्यं विशेषतः ॥
षडाननो रसोनाम सर्वज्वर कुलान्तकृत् ।

( भैषज्यरत्नावली पृ० ७८ )

विद्यावल्लभोरसः

रसम्लेच्छशिलातालाश्चन्द्रद्व्यग्न्यर्क भागिकाः ।
पिष्टातान् सुपर्वातोयैस्ताम्रपात्रोदरे क्षिपेत् ॥
न्यस्तं शरावे संरुध्य वालुका यंत्रगं पचेत् ।
स्फुटन्ति व्रीहयो यावत्तच्छिरःस्थाःशनैःशनैः ॥
संचूर्ण्य शर्करा युक्तं द्विवल्लं भक्षयेत्ततः ।
विषमाख्यान् ज्वरान् हन्ति तैलाम्लादि विवर्जयेत् ॥

( भै० र० पृ० ७७ )

ज्वरकुञ्जरपारीन्द्ररसः

मूर्छितंरसकर्षैकं तदर्द्धं जारिताभ्रकम् ।
तारं ताप्यञ्च रसजं* रसकं ताम्रकं तथा ॥
मौक्तिकं विद्रुमं लौहं गिरिजं गैरिकं शिला ।
गन्धकं हेमसारञ्च पलार्द्धञ्च पृथक् पृथक् ॥

*रसजं रसगर्भं रसाञ्जनं ( येलो ओक्साइड आफ मर्करी )

क्षीरावी* सुरवल्लीच शोथघ्नी गणिकारिका।
झाटामला † ज्योत्स्निका च सतिक्ता तु सुदर्शना॥
अग्निजिह्वा ‡ पूतितैला § शूर्पपर्णी प्रसारिणी॥
प्रत्येकस्वरसं दत्वा मर्दयेत्त्रिदिनावधि।
भक्षयेत्पर्णखंडेन चतुर्गुञ्जाप्रमाणतः॥
महाग्निकारको रोगसङ्करघ्नः प्रयोगराट्।
सन्ततं सततान्येद्युस्तृतीयकचतुर्थकान्॥
ज्वरान्सर्वान्निहन्त्याशु भास्करस्तिमिरंयथा।
कासं श्वासं प्रमेहञ्च सशोथं पाण्डुकामले॥
ग्रहणीं क्षयरोगञ्च सर्वोपद्रवसंयुतम्।
ज्वरकुञ्जरपारीन्द्रः प्रथितः पृथिवीतले॥

(भै० र० पृ० ७७)

श्रीजयमंगलो रसः

हिंगुलसंभवं सूतं गन्धकं टङ्कणन्तथा।
ताम्रं बङ्गं माक्षिकञ्च सैन्धवं मरिचं तथा॥
समं सर्व्वं समाहृत्य द्विगुणं स्वर्णभस्मकम्।
तदर्द्धं कान्तलौहञ्च रूप्यभस्मापि तत्समम्॥
एतत्सर्वं विचूर्ण्याथ भावयेत्कनकद्रवैः।
शेफालीदलजैश्चापि दशमूलरसेन च॥
किराततिक्तकक्वाथैस्त्रिवारं भावयेत्सुधीः।

---

* क्षीरावी—खिरणी इति प्रसिद्धा।

† झाटामला—भूम्यामलकी।

‡ अग्निजिह्वा—ईश, लाङ्गलीति।

§ पूतितैला—लताकंटकी करञ्ज इति भाषायाम्।

भावयित्वा ततः कार्या गुञ्जाद्वयमिता वटी ॥

अनुपानं प्रयोक्तव्यं जीरकं मधुसंयुतम् ।
जीर्णज्वरं महाघोरं चिरकालसमुद्भवम् ॥

ज्वरमष्टविधं हन्ति साध्यासाध्यमथापिवा ।
पृथग्दोषांश्च विविधान् समस्तान् विषमज्वरान् ॥

मेदोगतं मांसगतमस्थिमज्जगतं तथा ।
अन्तर्गतं महाघोरं बहिःस्थञ्च विशेषतः ॥

नानादोषोद्भवञ्चैव ज्वरं शुक्रगतं तथा ।
निखिलं ज्वरनामानं हन्ति श्रीशिवशासनात् ॥

जयमङ्गल नामायं रसः श्रीशिवनिर्मितः ।
बलपुष्टिकरश्चैव सर्व्वरोगनिबर्हणः ॥

( भै. र. पृष्ठ ७१ )

ज्वराशनि रसः

रसं गन्धं सैन्धवञ्च विषं ताम्रं समं भवेत् ।
सर्वच्चूर्णसमं लौहं तत्समं चूर्णमभ्रकम् ॥

लौहे च लौहदण्डेन निर्गुण्ड्याः स्वरसेन च ।
मर्द्दयेद्यत्नतः पश्चान्मरिचं सूत तुल्यकम् ॥

पर्णेन सह दातव्यो रसो रक्तिकसम्मितः ।
कासं श्वासं महाघोरं विषमाख्यं ज्वरं वमिम् ॥

धातुस्थं प्रबलं दाहं ज्वरदोषं चिरोद्भवम् ।
यकृद्गुल्मोदरप्लीहश्वयथुञ्च विनाशयेत् ॥

( भै. र. पृ. ७५ )

स्वच्छन्दभैरवो रसः

समभागांश्च संगृह्य पारदामृतगन्धकान् ।
जातीफलस्य भागार्द्धं दत्वा कुर्य्याच्च कज्जलीम् ॥
सर्व्वार्द्धं पिप्पलीचूर्णं खल्लयित्वा निधापयेत् ।
गुञ्जैकं वा द्विगुञ्जं वा नागवल्लीदलैः सह ॥
आर्द्रकस्य रसेनापि द्रोणपुष्पीरसेन वा ।
शीतज्वरे सन्निपाते विसूच्यां विषमज्वरे ॥
पीनसे च प्रतिश्याये ज्वरेऽजीर्णे तथैव च ।
मन्देऽग्नौ वमने चैव शिरोरोगे च दारुणे ॥
प्रयोज्यो भिषजा सम्यग् रसः स्वच्छन्दभैरवः ।
पथ्यं दध्योदनं दद्याद्वीक्ष्यदोषबलाबलम् ॥

( भै. र. पृ. ७४ )

ज्वरकालकेतु रसः

रसं विषं गन्धक ताम्रकञ्च मनःशिलाऽरुष्कर तालकञ्च ।
विमर्द्य वज्रीपयसा समांशं गजाह्वयं तत्र पुटं विदध्यात् ॥
द्विगुञ्जमस्यैव मधुप्रयुक्तं ज्वरं निहन्त्यष्टविधं महोग्रम् ।
पुरा भवान्यै कथितो भवेन नृणां हिताय ज्वरकालकेतुः ॥

( भै. र. पृ. ७३ )

विश्वेश्वरो रसः

पारदं रसकं गन्धं तुल्यांशं मर्द्दयेद्रसे ।
अश्वत्थजेत्र्यहं पश्चाद्रसे कोलक मूलजे ॥
निदिग्धिका रसे काकमाचिकाया रसे तथा ।
द्विगुञ्जां वा त्रिगुञ्जां वा गोक्षीरेण प्रदापयेत् ।
रात्रिज्वरं निहन्त्याशु नाम्ना विश्वेश्वरो रसः ॥

( भैषज्यरत्नावली पृ० ७३ )

चातुर्थिकारि रसः

रसगन्धकलौहाभ्रहरितालं समांशकम् ।
रसार्द्धप्रमितं हेमं सर्व्वं खल्लोदरे क्षिपेत् ॥
कृष्णाधुस्तूरपयसा मुनिपुष्परसेन च ।
भावयित्वा वटी कार्या द्विगुञ्जाफलमानतः ॥
चम्पकद्रवयोगेन सेवितोऽयं रसेश्वरः ।
चातुर्थिकादीन्निखिलान्निहन्याद्विषमज्वरान् ॥

( भैषज्यरत्नावली पृ० ७२ )

त्र्याह्निकारि रसः

रसगन्धशिलातालं सर्वैरतिविषा समा ।
रसस्य द्विगुणं लौहं रौप्यं लौहार्द्ध सम्मितम् ॥
पिचुमर्दरसेनापि विष्णुक्रान्तारसेन च ।
सर्वं सम्मर्द्य वटिकाः कुर्य्याद् गुञ्जात्रयोन्मिताः ॥
हन्यादतिविषाक्वाथसंयुतोऽयं रसोत्तमः ।
त्र्याह्निकादीञ्ज्वरान् सर्वान् रक्षांसीव रघूद्वहः ॥

( भैषज्यरत्नावली पृ० ७२ )

वातश्लेष्मान्तको रसः

पञ्चकोलं प्रवालञ्च पारदं चाभ्रकं तथा ।
आर्द्रकस्वरसेनैव मर्द्दयेदतियत्नतः ॥
गुञ्जाद्वयं प्रदातव्यं नागवल्लीरसैर्युतम् ।
वातश्लेष्मज्वरहरो वातश्लेष्मान्तको रसः ॥
वातजं पित्तजं श्लेष्मद्विदोषजमपि क्षणात् ।
सर्वान् ज्वरान् निहन्त्याशु भास्करस्तिमिरं यथा ॥

( प्रकीर्ण )

ज्वरारिरसः

रसगन्धककासीसत्र्यूषणातिविषाऽभयाः ।
चम्पकत्वक् च सर्व्वाणि यवतिक्तारसैर्दिनम् ॥
मर्द्दयित्वा वटी कार्य्या रक्तिकाद्वयसम्मिता ।
आर्द्रकस्वरसेनाऽथ दापयेज्ज्वरशान्तये ॥
रसैर्वा बहुमञ्जर्य्याः केवलेन जलेन वा ।
नवज्वरं महाघोरं वातपित्तकफोद्भवम् ॥
सोपद्रवं त्रिदोषोत्थं जीर्णञ्च विषमज्वरम् ।
ज्वरारिरसनामाऽसौ नाशयेन्नात्र संशयः ॥

( रसराजसुन्दर )

त्रिलोचन वटी

वारिणामर्द्दयेत्तालं सीसकं मरिचं विषम् ।
मुद्गमात्रा वटीकार्य्या जलेन सितयासह ॥
द्विमुहूर्त्तान्तरं दद्यात् क्रमेण वटिका त्रयम् ।
त्रिलोचन वटी ह्येषा पर्य्यायज्वर * नाशनी ॥

( प्रकीर्ण )

बृहज्ज्वरांकुशोरसः

पारदं गन्धकं ताम्रं हिंगुलं तालमेव च ।
लौहं वङ्गं माक्षिकञ्च खर्परञ्च मनःशिला ॥
मृताभ्रकं गैरिकञ्च टङ्कनं दन्तिवीजकम् । †
सर्वाण्येतानि तुल्यानि चूर्णयित्वा विभावयेत् ॥
जम्बीर तुलसी चित्र विजया तिन्तिड़ी रसैः ।

---

* रिलापसिंग् फीवर इति पाश्चात्याः ।

† स्वर्णमभ्रं गैरिकञ्च टङ्कनं रूप्यमेवचेतिपाठान्तरम् ।

एभिर्दिनत्रयं रौद्रे निर्जने खल्ल गह्वरे ॥
चणमात्रां वटीं कृत्वा छायाशुष्कन्तु कारयेत् ।
महाग्निजननी चैषा सर्वज्वरविनाशिनी ॥
एकजं द्वन्द्वजञ्चैव चिरकाल समुद्भवम् ।
एकाहिकं द्वाह्निकञ्च त्रिदोषप्रभवं ज्वरम् ॥
चातुर्थकं तथात्युग्रं जलदोषसमुद्भवम् ।
सर्वान् ज्वरान् निहन्त्याशु भास्करस्तिमिरं यथा ॥
नातःपरतरं किञ्चिज्ज्वरनाशाय भेषजम् ।
महाज्वरांकुशो नाम रसोऽयं मुनिभाषितः ॥

( भै० र० पृ० ७१ )

स्वल्प ज्वरांकुशो रसः

शुद्धसूतं विषं गन्धं धूर्तबीजं त्रिभिःसमम् ।
चतुर्णां द्विगुणं व्योषं चूर्णं गुञ्जाद्वयं हितम् ॥
जम्बीरस्य च मज्जाभिरार्द्रकस्य रसैर्युतम् ।
ज्वरांकुशो रसोनाम्ना ज्वरान् सर्वान् प्रणाशयेत् ॥

( भै. र. पृ. ७० )

शीतभञ्जीरसः

पारदं रसकं तालं तुत्थं टङ्कन गन्धकम् ।
सर्व्वमेतत् समं शुद्धं कारवेल्ली रसैर्दिनम् ॥
मर्दयेत्तेन कल्केन ताम्रपात्रोदरं लिपेत् ।
अंगुल्यर्द्धार्द्ध मानेन तं पचेत् सिकताह्वये ॥
यन्त्रे यावत् स्फुटन्त्येव व्रीहयस्तस्य पृष्ठतः ।
ताम्रपात्रं समुद्धृत्य चूर्णयेन्मरिचैः समम् ॥

शीतभञ्जीरसो नाम द्विगुञ्जो वातिके ज्वरे ।
दातव्यः पर्णखण्डेन मुहूर्त्तान्नाशयेज्ज्वरम् ॥

( भै. र. पृ. ६६ )

पर्णखण्डेश्वरोरसः

समांशं मर्दयेत्खल्ले रसं गन्धं शिलां विषम् ।
निर्गुण्डीस्वरसैर्भाव्यं त्रिवारं चार्द्रकद्रवैः ॥
गुञ्जैकं भक्षयेत्पर्णे ज्वरं हन्ति महाद्भुतम् ।

( भै. र. पृ. ६६ )

श्रीरसराजः

भागैकं रसराजस्य भागैकं हेममाक्षिकम् ।
भागद्वयं शिलायाश्च गन्धकस्य त्रयो मताः ॥
तालकाष्टादशभागाः शुल्वंस्याद् भागपञ्चकम् ।
भल्लातस्य त्रयोभागाः सर्व्वमेकत्र चूर्णयेत् ॥
वज्रीक्षीरेप्लुतं कृत्वा दृढे मृण्मय भाजने ।
विधाय सुदृढां मुद्रां पचेत् यामचतुष्टयम् ॥
स्वाङ्गशीतं समुद्धृत्य खल्लयेत् सुदृढं पुनः ।
गुञ्जाचतुष्टयं चास्य पर्णखण्डेन दापयेत् ॥
रसराजः प्रसिद्धोऽयं ज्वरमष्टविधं जयेत् ।

( भै. र. पृ. ६८ )

मृतसञ्जीवनोरसः ।

हिंगुलभागाश्चत्वारो जैपालस्य त्रयो मताः ।
द्वौ भागौ टङ्कनस्यापि भागैकममृतस्य च ॥
तत्सर्वं मर्दयेत् श्लक्ष्णं शुष्कं यामं भिषग्वरः ।

शृङ्गवेराम्बुना मर्द्यं व्योषचित्रकसैन्धवैः ॥
यामद्वयमितस्तापं हरत्येष न संशयः ।
घनसारससारेण चन्दनेन विलेपनम् ॥
विदध्यात् कांस्यपात्रेण वीजयेद्रोगिणं भिषक् ।
शाल्यन्नं तक्र सहितं भोजयेदिन्दु संयुतम् ॥
सन्निपाते महाघोरे त्रिदोषे विषमज्वरे ।
आमवाते वातगुल्मे शूले प्लीह्नि जलोदरे ॥
शीतपूर्वे दाहपूर्वे विषमे सन्ततज्वरे ।
अग्निमान्द्ये च वाते च प्रयोज्योऽयं रसोत्तमः ॥
मृतसञ्जीवनो नाम विख्यातो रससागरे ।

( भै. र. पृ. ६८ )

अर्द्धनारीश्वरोरसः

रस गन्धामृतञ्चैव समं शुद्धञ्च टङ्कनम् ।
मर्द्दयेत्खल्लमध्ये तु यावत् स्यात् कज्जलप्रभम् ॥
नकुलारि मुखे क्षिप्त्वा मृदा संवेष्टयेद्बहिः ।
स्थापयेन्मृण्मये पात्रे ऊर्ध्वाधो लवणं क्षिपेत् ॥
भाण्डवक्त्रं निरुद्धयाथ चतुर्यामं हठाग्निना ।
स्वाङ्गशैत्यं समुद्धृत्य खल्ले कृत्वा तु कज्जलीम् ॥
गुञ्जामात्रं प्रदातव्यं नस्यकर्मणि योजयेत् ।
वामभागे ज्वरं हन्ति तक्षणाल्लोककौतुकम् ॥
कुर्य्याद्दक्षिणभागेन चारोग्यं निश्चितं भवेत् ।
गोप्याद् गोप्यतमं प्रोक्तं गोपनीयं प्रयत्नतः ॥
अर्द्धनारीश्वरो नाम रसोऽयं कथितो भुवि ।

( भै. र. पृ. ६७ )

श्रीकालानलरसः

रसं गन्धं मृताभ्रञ्च टङ्कनञ्च मनःशिला।
हिंगुलं गरलं दारु विषं ताम्रञ्च तत्समम्॥
विड़ालपदमात्रन्तु सर्वं शुद्धं विचूर्णयेत्।
भावनाय च दातव्यं लाङ्गली मूलकं तथा॥
घोषामूलं तथा देयं मूलं लोहित चित्रजम्।
अपुष्पफल भूधात्री मूलं भ्रमररुद्रकम्॥ *
छाग वाराह मायूर माहिषो मत्स्य एव च।
एतेषां च ददेत्पित्तमार्द्रकस्य रसेन च॥
प्रत्येकं मर्दितं शुष्कं कणमात्रा प्रमाणतः।

(भै. र. पृ. ६३)

कस्तूरीभैरवोरसः

हिंगुलञ्च विषं टङ्कं जातीकोषफले तथा।
मरिचं पिप्पलीं चैव कस्तूरीं च समांशिकाम्॥
रक्तिद्वयं ततः खादेत् सन्निपाते सुदारुणे।

(भै. र. पृ. ६२)

वृहत् कस्तूरीभैरवोरसः

मृगमदशशिसूर्या धातकी शूकशिम्बी।
रजतकनकमुक्ता विद्रुमं लौहपाठे॥
क्रिमिरिपुघनविश्वा वारिताल‌ाभ्रधात्री।
रविदलरसपिष्टं भैरवः कादिपूर्वः॥

---

* अत्र भ्रमरः भ्रमरेष्ठा भार्गीत्यर्थः

कस्तूरीभैरवः ख्यातः सर्व्वज्वरविनाशनः ।
आर्द्रकस्य रसैः पेयो विषमज्वरनाशनः ॥
द्वन्द्वजान्भौतिकान्वापि ज्वरान्कामादिसम्भवान् ।
अभिचारकृतांश्चैव तथा शस्त्रकृतान् पुनः ॥
निहन्याद् भक्षणादेव डाकिन्यादियुतांस्तथा ।
विल्वचूर्णैर्जीरकाभ्यां मधुना सह पानतः ॥
आमातिसारं ग्रहणीं ज्वरातीसारमेवच ।
अग्निदीप्तिकरः शान्तः कासरोगनिकृन्तनः ॥
क्षपयेद् भक्षणादेव मेहरोगं हलीमकम् ।
जीर्णज्वरं नूतनं वा द्वीकालीनञ्च सन्ततम् ॥
आक्षेपं भौतिकं वापि हन्ति सर्वान् विशेषतः ।
एकाहिकं द्व्याहिकं वा त्र्याहिकं चतुराहिकम् ॥
पाञ्चाहिकं वा षाष्ठाहं पाक्षिकं मासिकं पुनः ।
सर्वाञ्ज्वरान्निहन्त्याशु भक्षणादार्द्रकद्रवैः ॥

(भै. र. पृ. ६२)

श्रीप्रतापलङ्केश्वरो रसः

अपामार्गस्यमूलानां चूर्णं चित्रकमूलजैः ।
वल्कलैर्मर्दयित्वाथ रसं वस्त्रेण गालयेत् ।
तेन सूतसमं गन्धमभ्रकं पारदं विषम् ॥
टङ्कणं तालकञ्चैव मर्दयेद्दिनसप्तकम् ।
त्रिदिनं मुषलीकन्दैर्भावयेत् घर्मरक्षितम ॥
मूषाञ्च गोस्तनाकारामापूर्य्यो परि ढकयेत् ।
सप्तभिर्मृत्तिकावस्त्रैर्वेष्टयित्वा पुटेल्लघु ॥
रसतुल्यं लौहभस्म मृतवङ्गमहिस्तथा ।

मधूकसारं जलदं रेणुकं गुग्गुलं शिला ॥
चाम्पेयश्च समांशं स्यात् भागार्द्धशोधितं विषम् ।
तत्सर्वं मर्दयेत्खल्वे भावयेत् विषनीरतः ॥
आतपे सप्तधा तीव्रे मर्दयेत् घटिकाद्वयम् ।
कटुत्रयकषायेण कनकस्य रसेन च ॥
फलत्रयकषायेण मुनिपुष्परसेन च ।
समुद्रफेन नीरेन विजयापत्रवारिणा ॥
चित्रकस्य कषायेण ज्वालामुख्यारसेन च ।
प्रत्येकं सप्तधा भाव्यं तद्वत्पित्तैश्च पञ्चभिः ॥
सर्वस्य समभागेन विषेण परिधूपयेत् ।
विमर्द्य प्रक्षयित्वा च रक्षयेत् कूपिकोदरे ॥
गुञ्जैकं वह्निनीरेण शृङ्गवेररसेन वा ।
दद्याच्च रोगिणे तीव्रमौढ्य विस्मृति शान्तये ॥
क्षुरेण तालुमाहत्य घर्षयेदार्द्रनीरतः ।
नोद्घटन्ते यदा दन्तास्तदा कुर्यादमुं विधिम् ॥
सेचयेन्मन्त्रविद्वैद्यो वारां कुम्भशतैर्नरम् ।
भोजनेच्छा यदातस्य जायते रोगिणः परम् ॥
दध्योदनं सितायुक्तं दद्यात्तक्रं सजीरकम् ।
पाने पानं सिताजातं यदिच्छेत ददीत तत् ॥
एवं कृतेन शान्तिः स्यात् तापस्यच रुजस्य च ।
सचन्द्रंचन्दनरसालेपनं कुरु शीतलम् ॥
यूथिका मल्लिका जाती पुन्नाग बकुला वृताम् ।
विधाय शय्यां तत्रस्थां लेपनश्चन्दनैर्मुहुः ॥
हावभावविलासोक्तैः कटाक्षचञ्चलेक्षणैः ।
पीनोत्तुङ्गकुचापीडैः कामिनी परिरम्भणैः ॥

रम्यवीणा निनादोच्चैर्गायनैः श्रवणामृतैः ।
पुण्यश्लोक कथाद्यैश्च सन्तापहरणं कुरु ॥
दद्यात् वातेषु सर्वेषु सिन्धुजैः सह वह्निभिः ।
दद्यात् कणामाक्षिकाभ्यां कामलाक्षय पाण्डुषु ॥
तत्तद्रोगानुपानेन सर्व्वरोगेषु योजयेत् ।
अयं प्रतापलंकेशः सन्निपात हरः पर ॥

( भै० र० पृ० ६० )

अर्कमूर्त्ती रसः

लौहाष्टकं मारितमर्कभागं सूतं द्विभागं द्विगुणञ्च गन्धम् ।
विमर्द्दयेद्वह्निरसेन तापे दिनत्रयं चात्र विषं कलांशम् ॥
निक्षिप्य पित्तैः परिभावितोऽयं रसोऽर्कमूर्त्तिर्भवतित्रिदोषे ।
ताम्रस्य पात्रे तु दिनैकमात्रं निम्बूरसेनापि च पित्तवर्गैः ॥
क्षुद्रार्द्रकोत्थेन रसेन सूतस्त्रिदोषदावानल एष सिद्धः ।
गुञ्जाद्वयं त्र्यूषणयुक्तमस्य ददीत चित्रार्द्ररसेन वापि ॥
नासापुटे चापि नियोजनीया गुञ्जास्य शुण्ठी मरिचेन युक्ता ।

( भै० र० पृ० ५६ )

त्रिदोषदावानलकालमेघो रसः

तालेन वङ्गं शिलयाच नागं रसैः सुवर्णं रवि तारपत्रम् ।
गन्धेन लौहं दरदेन सर्व्वं पुटे मृतं योजय तुल्य भागम् ॥
तत्तुल्य सूतं द्विगुणञ्च गन्धं तुल्यञ्च गन्धेन समान भागम् ।
निम्बूत्थतोयेनविमर्द्यसर्वं गोलं प्रकृत्याथ मृदाविलिप्य ॥
पुटञ्च दत्वाथ विमर्दयेनं गन्धेन तुल्येन कृशानुनीरैः ।
विषञ्च दत्वाथ कलाप्रमाणमीषत् कृशानुत्थरसैः पचेत्तत् ॥
पित्तैस्तथा भावित एष सूतस्त्रिदोषदावानल कालमेघः ।

वल्लं ददीतास्य च पूर्वयुक्त्या दाहोत्तरे तं मधुपिप्पलीभिः ॥
मुद्गश्च शाल्यन्नमिहप्रशस्तं पथ्यं भवेत् कोष्णमिदंदिवान्ते ॥
(भै० र० पृ० ५६)

बड़वानलोरसः

कान्तञ्च सूतं हरितालगन्धं समुद्रफेनं लवणानि पञ्च ।
नीलाञ्जनं तुत्थकमेव रूप्यं भस्मप्रवालानि वराटकाश्च ॥
वैक्रान्त शम्बूक समुद्रशुक्ति सर्वाणि चैतानि समानि कुर्य्यात् ।
सूतं भवेद्द्वादशभागकञ्च स्नुह्यर्क दुग्धेन विमर्दयेच्च ॥
दिनत्रयं वह्निरसैस्ततश्च निवेशयेत्ताम्रजसंपुटे तत् ।
मृदाच संलिप्य रसं पुटेत्तद्रसस्ततःस्याद् बडवानलाख्यः ॥
तत्पादभागेनविषं नियोज्य कृशानुतोयेन पचेत् क्षणंतत् ।
वातप्रधाने च कफप्रधाने नियोजयेत् त्र्यूषणचित्रयुक्तम् ।
दोषत्रयोत्थेऽपि च सन्निपाते वाताधिकत्वादिह सूतकोक्तः ॥
(भैषज्यरत्नावली पृ० ५६)

त्रैलोक्यचिन्तामणिः

रसभस्म त्रयोभागा द्विभागश्च भुजङ्गकम् ।
कालकूटश्च षड्भागं भागैकं तालकं तथा ॥
गोदन्तं गगनं तुत्थं शिलागन्धक टङ्कनम् ।
जयपालोन्मत्त दन्ती करवीरश्च लाङ्गली ॥
पलाशमूलजैर्नीरैः सप्तधा भावितं दृढम् ।
चित्रमूल कषायेण चार्द्रकस्य च वारिणा ॥
मात्स्य माहिष मायूरच्छाग वाराह डुण्डुभम् ।
प्रत्येकं दशधा मर्द्य शिलाखल्लेच संक्षयात् ॥

धान्यद्वयां वटीं कुर्य्यात् शुद्ध वस्त्रेण धारयेत् ।
दातव्यं चानुपानेन नारिकेलोदकेन च ॥
ताम्बूलञ्च ततोदद्यात् भक्ष्यंशीतोपचारकम् ।
तिलतैले सदा स्नानं घृतमत्स्यादि भोजनम् ॥
शीताम्लं दधिसंयुक्तं पुराणान्नञ्च भक्षयेत् ।

(भै० र० पृ० ५७)

रसेश्वरः

रसेन गन्धं द्विगुणं गृहीत्वा तत्पादताम्रं हरिताल हेम ।
भस्मीकृतं योजय मर्द्दयेत्तु दिनत्रयं वह्निरसेन घर्मे ॥
विषञ्च दत्वात्र कला प्रमाणमजादिपित्तैः परिभावयेच्च ।
रक्तिद्वयं चास्य ददीत वह्नि कटुत्रयेणाद्रेरसप्रयुक्तम् ॥
तैलेन चाभ्यक्त वपुश्च कुर्य्यात् स्नानं जलेनैव सुशीतलेन ।
यावद्भवेत् दुःसहमस्य शीतं मूत्रं पुरीषञ्च शरीरकम्पः ॥
पथ्ये यदीच्छा परिजायतेऽस्य मरीचखण्डं दधि भक्तकञ्च ।
अल्पं ददीतार्द्रकमत्र शाकं दिनाष्टकं स्नानमिदञ्चपथ्यम् ॥

(भै. र. पृ. ५८)

कालाग्निभैरवोरसः

शुद्ध सूतं द्विधागन्धं मर्द्दयेद्गोक्षुरद्रवैः ।
भावितञ्च विशोष्याथ चूर्णयेदतिचिक्कणम् ॥
चूर्णतुल्यं मृतं ताम्रं ताम्राद्दशांशिकं विषम् ।
हिंगुलं रसभागञ्च द्वौ भागौ कनकस्य च ॥
बाणभागोऽत्र गोदन्तः कालभागा मनःशिला ।
टङ्कनं नेत्रभागञ्च ऋतुभागञ्च खर्परम् ।

ब्रह्मभागश्च जैपालं नेत्रभागंहलाहलम् ।
माक्षिकं चाग्निभागश्च लौहं वङ्गश्च भागकम् ॥
सर्वान् खल्लोदरे क्षिप्त्वा क्षीरेणार्कस्य मर्दयेत् ।
दशमूलकषायेण मर्दयेद्याममात्रकम् ॥
पञ्चमूलकषायेण तथैवच विमर्दयेत् ।
चणमात्रां वटीं कृत्वा बलं ज्ञात्वा प्रयोजयेत् ॥
सर्व्वं त्रिदोषजं हन्ति सन्निपातं सुदारुणम् ।
पूर्व्ववद्दापयेत्पथ्यं जलयोगश्चकारयेत् ॥
पथ्यं शाल्योदनं ज्ञेयं दधिभक्तसमन्वितम् ।
कालाग्नि भैरवोनाम रसोऽयं भूरिपूजितः ॥

( भैषज्यरत्नावली पृ० ६७ )

श्रीसन्निपातमृत्युंजयो रसः

विषं सूतकगन्धौ च पित्तं मत्स्यवराहयोः ।
आजमायूरपित्ते च महिष्याश्चापि योजयेत् ॥
हरितालश्च सव्योषं वानरीबीज संयुतम् ।
अपामार्गं चित्रमूलं जयपालश्च कल्कयेत् ॥
एतत्सर्वं समांशेन छागीमूत्रेण मर्दयेत् ।
माषेन सदृशी कार्य्या वटिका सद्भिषग्वरैः ॥
महाज्वरे महाशीते महाशीतज्वरेऽपि च ।
मज्जागते सन्निपाते विसूच्यां विषमज्वरे ॥
असाध्ये मानवे युञ्ज्यादेकाहाज्ज्वरनाशिनी ।
जलोदरे शैथिलाङ्गे नासास्रावे च पीनसे ॥
अजीर्णे मूर्च्छनाभावे श्लेष्मभावेऽतिदुर्जये ।
शोथकामलपाण्ड्वादि सर्व्वरोगापहारकः ॥

सन्निपातं जयेदेष ज्ञानज्योतिः प्रकाशितः ।
भृङ्गराज रसेनाऽयं रसराजः प्रदीयते ॥
निर्व्वाते निर्जने स्थाने बहुवस्त्र समावृते ।
प्रस्वेदः क्षणमात्रेण जायते चिह्नमीदृशम् ॥
मूर्च्छितः पतितो भूमौ दह्यमानः पुनः पुनः ।
एवं चिह्नं समालोक्य वदेन्नैरुज्य माशु वै ॥
पथ्यंयद्याचतेरोगी तद्दातव्यं प्रयत्नतः ।
दध्योदनं शीतजलं दातव्यं तद्द विचक्षणैः ॥
एवं महारसः श्रेष्ठः शम्भुना प्ररितो भुवि ।
कृपया सर्व्व भूतानां ज्ञानज्योतिः प्रकाशितः ॥

( भै. र. पृ. ५६ )

प्राणेश्वरोरसः

शुद्धसूतं तथा गन्धं मृताभ्रं विषसंयुतम् ।
रसं संमर्द्दितं तालमूलीनीरैस्त्र्यहं बुधः ॥
पूरयेत्कूपिकान्ते च मुद्रयित्वा च शोषयेत् ।
सप्तभिर्मृत्तिका वस्त्रैर्वेष्टयित्वा च शोषयेत् ।
पुटेत् कुण्डप्रमाणेन स्वाङ्गशीतं समुद्धरेत् ॥
गृहीत्वा कूपिका मध्यान्मर्द्दयेच्च दिनं ततः ।
अजाजी जीरकं हिंगु सर्जिका टङ्कनं जगत् ॥ *
गुग्गुलुः पञ्चलवणं यवक्षारो यमानिका ।
मरिचं पिप्पली चैव प्रत्येकं रसमानतः ॥

* जगत् शब्देन सौराष्ट्र मृत्तिका ग्राह्या, तद्भावे तुवरी, स्फटिकेति भाषायाम्.

एषां कषायेण पुनर्भावयेत् सप्तधातपे ।
नागवल्ली दलयुतं पञ्चगुञ्जं रसेश्वरम् ।
दद्यान्नवज्वरे तीव्रे सोष्णं वारि पिवेदनु ॥
प्राणेश्वरो रसो नाम सन्निपात प्रकोपनुत् ॥
शीतज्वरे दाहपूर्वे गुल्मशूले त्रिदोषजे ।
वाञ्छितं भोजनं दद्यात् कुर्य्याच्चन्दनलेपनम् ॥
तापोद्रेकस्य शमनं वलाधिष्ठान कारकम् ।
भावेन्नात्र सन्देहः स्वास्थ्यञ्च लभते नरः ॥

( भैषज्यरत्नावली पृ० ५३ )

सन्निपातभैरवोरसः

रसं विषं गन्धकञ्च हरितालं फलत्रयम् ।
जयपाल त्रिवृत् स्वर्णं ताम्रं सीसाभ्रलोहकम् ।
अर्कक्षीरं लाङ्गलीञ्च स्वर्णमाक्षिकमेव च ।
समं कृत्वा रसेनैषां त्रिंशद्वारञ्च मर्दयेत् ॥
अर्कश्वेतालम्बुषा च सूर्य्यावर्त्तश्च कारवी ।
काकजङ्घा शोणकश्च कुष्ठं व्योषंविकङ्कतम् ॥
सूर्यमणिश्चन्द्रकान्तो निर्गुण्डीशजटापि च ।
धुस्तूर दन्ति पिप्पल्यौ दशाष्टाङ्गमिदं शुभम् ॥
रसतुल्यं प्रदातव्यं दत्त्वा तोयं चतुर्गुणम् ।
शिष्टैक गुणतोयेन भावना विधिरिष्यते ॥
भावनायां भावनायां शोषणं मुहुरिष्यते ।
ततश्च वटिकां कृत्वा भैरवाय बलिं ददेत् ॥
रसोऽयं श्रीसन्निपातभैरवो ज्वरनाशनः ।
सर्वोपद्रवसंयुक्तं ज्वरं हन्ति न संशयः ॥

सन्निपातज्वरं हन्ति जीर्णञ्च विषमं तथा।
ऐकाहिकं द्व्याहिकञ्च चातुर्थकमपिध्रुवम् ॥
ज्वरञ्च जलदोषोत्थं सर्व्वरोग समाकुलम्।
भैरवस्य प्रसादेन जगदानन्दकञ्जयी ॥

( भैषज्य रत्नावली ५४ )

सिद्धफला पानीयवटिका

अनाथनाथो जगदेकनाथः श्रीलोकनाथः प्रथमः प्रसन्नः।
जगाद पानीयवटीं सुपर्वीं तामेव वक्ष्यामि गुरुप्रसादात् ॥
जयार्कस्वरसं चैव निर्गुण्डी वासकं तथा
वाट्यालक करञ्जञ्च सूर्य्यावर्तक चित्रकौ।
ब्राह्मी वनमर्यपञ्च भृङ्गराजं विनिक्षिपेत् ॥
दन्ती च त्रिवृता चैव तथारग्वध पत्रकम्।
सहदेवामरं भण्डी तथा त्रिपुरभण्डिका ॥
मण्डूकपर्णी पिप्पल्यौ द्रोणपुष्पक वायसी।
गुञ्जाकिनी केशराजस्तथा योजनमल्लिका ॥
आसारगोति विख्यातो धुस्तूरः कनकस्तथा।
त्रैलोक्य विजया चैव तथा श्वेतापराजिता ॥
प्रत्येकं कार्षिकञ्चैव रसमाकृष्य भाजने।
एकैकञ्च रसं दत्वा मर्दयेल्लौह दण्डतः ॥
चण्डातपे च संशोष्य क्षीरं तत्र पुनः क्षिपेत्।
स्नुहीक्षीरं चार्कदुग्धं वटदुग्धं तथैव च।
प्रत्येकं कार्षिकं दत्वा मर्दयेच्च पुनः पुनः ॥
सुमर्दितञ्च तं ज्ञात्वा यदा पिण्डत्वमागतम्।
द्रव्याण्येतानि सञ्चूर्ण्य वस्त्रपूतानि कारयेत् ॥

दग्धहीरं चातिविषां कोचिलामभ्रकं तथा ।
पारदं शोधितञ्चैव गन्धकं विषमाधुरम् ॥
हरितालं विषञ्चैव माक्षिकञ्च मनःशिला ।
प्रत्येकञ्च चतुर्माषं सर्व्वं चूर्णीकृतञ्च तत् ॥
प्रक्षिप्य मर्द्दयेत् सर्व्वं शोषयित्वा पुनः पुनः ।
सुमर्दितञ्च तं दृष्ट्वा यदा पिण्डत्वमागतम् ॥
तिल प्रमाणा वटिका कारयेन्मतिमान् भिषक् ।
त्रिदोषजनितो वैद्यमुक्तयोऽपि बहुसम्मतः ।
लङ्घनैर्बालुकास्वेदैः प्रक्रान्तो दीनदर्शनः ॥
संपूज्य करुणाधारं प्रणम्य च खसर्पणम् ।
शरावे वारिणा घृष्ट्वा विंशतिं वटिकाः पिबेत् ॥
पीतंतद्भेषजं पश्चाद् वस्त्रेणाच्छादयेन्नरम् ।
रसलग्नं वपुर्ज्ञात्वा दद्यात् वारि सुशीतलम् ॥
शराव प्रमितं वारि पातव्यञ्च पुनः पुनः ।
सन्निपातज्वरञ्चैव दाहञ्चैव सुदारुणम् ॥
कासं श्वासञ्च हिक्काञ्च विड्ग्रहं चाश्मरीं जयेत् ।
मूत्ररोग विबन्धेतु दातव्यं क्षीरसंयुतम् ॥
पञ्चतृणकृतकाथं दातव्यञ्च पुनः पुनः ।
पानीय वटिका ह्येषा लोकनाथेन निर्मिता ॥
लोकानामुपकाराय सर्व्वसिद्धि प्रदायिनी ।

(भै० र० पृ० ४७)

बृहत् सूचिकाभरणो रसः

रस गन्धक नागाभ्रं विषं स्थावर जङ्गमम् ।
मात्स्यवाराहमायूरच्छागपित्तैर्विभावयेत् ॥

सूचिकाभरणोनाम भैरवेण प्रकीर्तितः ।
सूचिकाग्रेण दातव्य पयःपेटीजलेन च ॥
त्रयोदशे सन्निपाते विसूच्यामतिसारके ।
त्रिदोषजे तथा कासे दापयेत् कुशलो भिषक् ॥
पयःपेटीशतं दद्यात् भोजनं दधि भक्तकम् ।
तथा सुभर्जितं मांसं लेपनं तिल चन्दनैः ॥
रोगिणो यत् प्रिय द्रव्यं तस्मैतच्च प्रदापयेत् ।

( भै. र. पृ. ४६ )

मृतोत्थापनोरसः

शुद्धसूतं द्विधागन्धं शिला च विषहिंगुलम् ।
मृतकान्ताभ्रताम्रायस्तालकं माक्षिकं समम् ॥
अम्लवेतस जम्बीर चाङ्गेरीणां रसेन च ।
निर्गुण्डीहस्तिशुण्ड्योश्चद्रवैर्मर्द्य दिनत्रयम् ॥
रुद्ध्वा तु भूधरे पाच्यं दिनान्तेतत्समुद्धरेत् ।
चित्रकस्य कषायेण मर्दयेत् प्रहरद्वयम् ॥
माषमात्रं प्रदातव्यं हिंगुव्योषार्द्रकद्रवैः ।
सकर्पूरानुपानं स्यान्मृतस्योत्थापने रसे ॥
पीडितं सन्निपातेन गतं वापि यमालयम् ।
तत्क्षणाज्जीवयत्येष पथ्यं क्षीरैः प्रयोजयेत् ॥

( भै० र० पृ० ४५ )

आनन्द भैरवीवटी

विषं त्रिकटुकं गन्धं टङ्कनं मृत शुल्वकम् ।
धुस्तूरस्य च बीजानि हिंगुलं नवमं स्मृतम् ॥
एतानि समभागानि दिनैकं विजयारसैः ।
मर्द्दयेच्चणकाभा तु वटिकानन्दभैरवी ॥

भक्षयित्वा पिवेच्चानु रविमूल कषायकम् ।
सव्योषं हन्ति नो चित्रं सन्निपातं सुदारुणम् ॥

( भैषज्य रत्नावली पृष्ठ ४३ )

ब्रह्मरन्ध्र रसः

रसाभ्रगन्धकं तालं हिंगुलं मरिचं तथा ।
टङ्कनं सैन्धवोपेतं सर्वांशममृतं तथा ॥
सर्वपाद समेपेतं महिषीपित्तमर्दितम् ।
ब्रह्मरन्ध्रे प्रयोक्तव्यं सन्यासज्ञानसङ्क्रमे ॥
सहस्र कलसैः स्नानं लेपनं चन्दनादिभिः ।
इक्षुमुद्गरसं भोज्यं तक्रभक्तं यथेप्सितम् ॥

( भै० र० पृ० ४४ )

श्रीवेतालोरसः

रसं गधं विषञ्चैव मरिचालं समांत्तिकम् ।
मर्द्दयेच्छिलया तावत् यावज्जायेत कज्जलम् ॥
गुञ्जामात्रप्रमाणेन हरेद्द्वादशसंज्ञकम् ।
साध्यासाध्यं निहन्त्याशु सन्निपातं सुदारुणम् ॥
म्लानेषु लिप्तदेहेषु मोहग्रस्तेषु देहिषु ।
दातुमर्हति वेतालो यमदूत निवारकः ॥

( भैषज्य रत्नावली पृ० ४२ )

सौभाग्य वटी

सौभाग्यामृत जीर पञ्चलवण व्योषाभयाक्षामला ।
निश्चन्द्राभ्रक शुद्धगन्धकरसानेकीकृतान् भावयेत् ॥
निर्गुण्डीयुग भृङ्गराजक वृषापामार्गपत्रोल्लसत् ।
प्रत्येक स्वरसेन सिद्धवटिका हन्ति त्रिदोषोदयम् ॥
येषां शीतमतीव दाहमखिलं स्वेदद्रवार्द्रीकृतम् ।

निद्रां घोरतरां समस्तकरण व्यामोहमूढं मनः ॥
शूलश्वास बलासकाससहितं मूर्च्छारुचिस्तृड्ज्वर ।
स्तेषां वै परिहृत्य जीवितमसौ गृह्णाति मृत्योर्मुखात् ॥
( भै० र० पृ० ४३)

कुलवधूः

शुद्धसूतं मृतं नागं मृतं ताम्रं मनःशिला ।
तुत्थकं तुल्यतुल्यांशं दिनमेकं विमर्दयेत् ॥
रसैश्चोत्तरवारुण्याश्चणमात्रा वटी कृता ।
सन्निपातं निहन्त्याशु नस्यमात्रेण दारुणम् ॥
एषः कुलवधूर्नाम जलैर्घृष्ट्वा प्रदापयेत् ।
( भैषज्यरत्नावली पृ० ४३ )

मोहान्धसूर्योरसः

गन्धेशौलशुनाम्भोभिर्मर्दयेद्याम मात्रकम् ।
तस्योदकेन संयुक्तं नस्यं तत्प्रतिबोधयेत् ॥
मरिचेन समायुक्तं हन्ति तन्द्राप्रतापकम् ।
( भैषज्यरत्नावली पृ० ४३ )

अचिन्त्यशक्ति रसः

रसगन्धकयोर्ग्राह्यं प्रत्येकं माषकद्वयम् ।
भृङ्गकेशाख्य निगुण्डी मण्डूकीपत्रसुन्दराः ॥
श्वेतापराजितामूलं शालिञ्चकालमारिषम् ।
सूर्यावर्तः सितश्चैषां चतुर्माषक सम्मितैः ॥
प्रत्येकं स्वरसैः खल्लशिलायामवधानतः ।
स्वर्णमाक्षिक माषञ्च दत्वा मरिच माषकम् ॥
नेपालताम्रदण्डेन घृष्ट्वा तं कज्जलद्युतिम् ।
वटी मुद्गोपमा कार्य्या छायाशुष्का तु रक्षिता ॥

प्रथमे वटिकास्तिस्नः कृत्वा नवशरावके ।
ततः खसर्पणं सूर्य्यं पूजयित्वा प्रणम्य च ॥
वारिणा गोलयित्वातु पातुं देयञ्च रोगिणे ।
स्वेदोपवासरचिते क्लान्ते चात्यबले तथा ॥
द्वितीयेऽह्नि वटीयुग्मं वटीमेकां तृतीयके ।
यावन्तो वटका देयास्तावज्जल शरावकम् ॥
तृष्णायाञ्च रसं दद्याज्जाङ्गलानां जलं तृषि ।
लुलाप दधि संयुक्तं भक्तं भोज्यं यथेप्सितम् ॥
लावपक्षिरसो देयः संस्कृतः सैन्धवादिभिः ।
पथ्यमग्निवलं वीक्ष्य वारिभक्तरसं तथा ॥
शिरश्चलन शूलादौ तैलं नारायणादि च ।

(भै. र. पृष्ठ ४२)

उदकमञ्जरी रसः

सूतो गन्धष्टङ्कणः सोषणः स्यादेतैस्तुल्या शर्करामत्स्यपित्तैः ।
भूयोभूयो भावयेच्च त्रिरात्रं वल्लो देयः शृङ्गवेरस्य वारा ॥
सम्यक् तापे वारिभक्तं सतक्रं बृन्ताकाढ्यं पथ्यमत्र प्रदिष्टम् ।
अह्नैवोग्रं हन्ति सद्यो ज्वरन्तु पित्ताधिक्ये मूर्न्द्धिवारिप्रयोगः ॥

(भै० र० पृ० ४२)

चण्डेश्वरो रसः

रसं गन्धं विषं ताम्रं मर्दयेदेकयामकम् ।
आर्द्रकस्य रसेनैव मर्दयेत्सप्तवारकम् ॥
निर्गुण्ड्याः स्वरसे पश्चान्मर्दयेत् सप्तवारम् ।
गुञ्जैकार्द्ररसेनैव दत्तो हन्ति ज्वरं क्षणात् ॥

वातजं पित्तजं श्लेष्म द्विदोषजमपि क्षणात् ।
सुशीतलजलेस्नानं तृषार्थे क्षीर भोजनम् ॥
आम्रञ्च पनसंनैव चन्दनागुरुलेपनम् ।
एतत्समो रसो नास्ति वैद्यानां हृद्यंगमः ॥
एष चन्डेश्वरो नाम सर्व्वज्वर कुलान्तकृत् ॥

( भैषज्यरत्नावली पृष्ठ ४१ )

रत्नगिरि रसः

शुद्धसूतं समं गन्धं मृतताम्राभ्रहाटकम् ।
प्रत्येकं सूत तूल्यंस्यात् सूतार्द्धं मृतलौहकम् ॥
लौहार्द्धं मृत वैकान्तं मर्द्दयेद् भृङ्गजद्रवैः ।
पर्पटीरसवत् पाच्यं चूर्णितं भावयेत् पृथक् ॥
शिग्रुवासक निर्गुण्डी वचाग्नि भृङ्गमुण्डिकैः ।
क्षुद्रामृता जयन्तीभिर्मुनिब्राह्मी सुतिक्तकैः ॥
कन्यायाश्च द्रवैर्भाव्यं प्रतिवारं त्रिधा त्रिधा ।
रुद्ध्वा लघुपुटे पाच्यं वालुकायंत्र मध्यगम् ॥
यन्त्रं निरुध्ययत्नेन स्वाङ्गशीतं समुद्धरेत् ।
चूर्णं नवज्वरे देयं माषमात्रं रसस्य वै ॥
कृष्णाधान्य समायुक्तं मुहूर्त्तान्नाशयेज्वरम् ।
अयं रत्नगिरिर्नाम रसो योगस्य वाहकः ।

( भैषज्यरत्नावली पृ० ४१ )

वैद्यनाथ वटी

शार्ङ्गी गन्धमथो रसस्य च तथा कृत्वा द्वयोः कज्जलीम् ।
तिक्ताचूर्णमथाक्षमेव सकलं रौद्रं त्रिधा भावयेत् ॥

पश्चात् तत्सुषवी रसेन नतुवा क्वाथेऽमले त्रैफले।
संशोष्या गुड़िका कलायसदृशी कार्य्या बुधैर्यत्नतः॥
ज्ञात्वा दोषबलं रसेन सुषवी पत्रस्य पर्णस्य वा।
एकद्वित्रिचतुः क्रमेण वटिकां दद्यात् कदुष्णाम्बुना।
हन्ति शूलनिचयं नवज्वरं पाण्डुतामरुचिशोथसञ्चयम्।
रेचने च दधिभक्त भोजनं वैद्यनाथ सुकुमार रेचनम्॥

(भैषज्यरत्नावली पृ० ४०)

प्रचण्ड रसः

अमृतं पारदं गन्धं मर्दयेत् प्रहरद्वयम्।
सिन्धुवार रसैः पश्चात् भावयेदेकविंशतिम्॥
तिलप्रमाणं दातव्यं नवज्वर विनाशनम्।
उद्वेगे मस्तके तैलं तक्रञ्चापि प्रदापयेत्॥
अनुपानमार्द्ररसः प्रचण्डरस संज्ञकः।

(भै. र. पृ. ४०)

नवज्वरांकुशो रसः

क्रमेण वृद्धान् रसगन्ध हिंगुलान्,
नैकुम्भबीजान्यथ दन्तिवारिणा।
पिष्ट्वास्य गुञ्जाभिनवज्वरापहा,
जलेन चाह्ना सितया प्रयोजिता॥

(भैषज्यरत्नावली पृ० ३६)

श्रीमृत्युञ्जयोरसः

विषस्यैकस्तथा भागो मरिचं पिप्पली कणाः।
गन्धकस्य तथा भागो भागः स्यात् टंकनस्य वै॥

सर्व्वत्र समभागः स्यात् द्विभागं हिंगुलं भवेत् ।
जम्बीरस्य रसेनात्र हिंगुलं भावयेत् भिषक् ॥
रसश्चेत्समभागः स्यात् हिंगुलं नेष्यते तदा ।
गोमूत्रशोधितञ्चात्र विषं सोरविशोधितम् ॥
चूर्णयेत् खल्लमध्येतु मुग्दमात्रां वटीं चरेत् ।
मधुना लेहनं प्रोक्तं सर्व्वज्वर निवृत्तये ॥
दध्युदकानुपानेन वातज्वर निवर्हणः ।
आर्द्रकस्य रसैः पानं दारुणे सान्निपातिके ॥
जम्बीररसयोगेन अजीर्णं ज्वरनाशनः ।
अजाजीगुड़संयुक्तो विषमज्वर नाशनः ॥
जीर्णज्वरे महाघोरे पुरुषे यौवनान्विते ।
पूर्णमात्रा प्रदातव्या पूर्णं वटिचतुष्टयम् ॥
अतिक्षीणेऽतिवृद्धेच शिशौ चाल्पवयस्यपि ।
तूर्य्यमात्रा प्रदातव्या व्यवस्थासार निश्चिता ॥
नवज्वरे प्रदाने च यामैकान्नाशयेज्ज्वरम् ।
अक्षीणे च कफाभावे दाहे च वातपैत्तिके ॥
सितां दद्यात् प्रयत्नेन नारिकेलाम्बु निर्भयम् ।
अयंमृत्युञ्जयो नाम रसः सर्व्वज्वरापहः ॥
अनुपान प्रभेदेन निहन्ति सकलान् गदान् ॥

(भै. र. पृ ३८)

तरुणज्वरारि रसः

जेपाल गन्धं विष पारदञ्च तुल्यं कुमारीस्वरसेन मर्द्यम् ।
अस्यद्विगुञ्जा हि सितोदकेन ख्यातो रसोऽयं तरुणज्वरारिः ॥
दातव्य एषोऽहनि-पञ्चमे वा षष्ठेऽथवा सप्तम एव वापि ।

जाते विरेके विगतज्वरः स्यात् पटोल मुद्गान्न निषेवणेन ॥

( भै. र. पृ. ३८ )

शीतभञ्जी रसः

रस हिंगुल गन्धश्च जैपालं मर्दितं त्रिभिः ।
दन्तीक्वाथेन संमर्द्य रसो ज्वरहरः परः ॥
आर्द्रकस्वरसेनाथ दापयेद्रक्तिकाद्वयम् ।
नवज्वरं महाघोरं नाशयेद्याममात्रकम् ॥
शीततोयं पिवेच्चानु इक्षुर्मुद्गरसो हितः ।
शीत भञ्जीरसो नाम्ना सर्वज्वरकुलान्तकृत् ॥

हिंगुलेश्वरो रसः

तुल्यांशं मर्दयेत् खल्ले पिप्पली हिंगुलं विषम् ।
गुञ्जार्द्धं मधुना देयं वातज्वर निवृत्तये ॥
अनुपाने रसा योज्या देशकालानुसारिभिः ।
दोषघ्नैर्मधुना वापि केवलेन जलेन वा ॥

( भै० र० पृ० ३७ )

ज्वरनाग मयूर चूर्णम्

लौहाभ्रं टङ्कणं ताम्रं तालकं वङ्गमेव च ।
शुद्धसूतं गन्धकञ्च शिग्रुबीजं फलत्रिकम् ॥
चन्दनातिविषा पाठा वचा च रजनीद्वयम् ।
उशीरं चित्रकं देवकाष्ठञ्च सपटोलकम् ॥
जीवकर्षभकाजाज्यस्तालीसं वंशरोचनम् ।
कण्टकार्याः फलं मूलं शटी पत्रं कटुत्रयम् ॥
गुडूचीसत्वधान्याकं कटुका क्षेत्रपर्पटी ।
मुस्तकं बालकं बिल्वं यष्टीमधु समंसमम् ॥

भागाच्चतुर्गुणं देयं कृष्णजीरस्य चूर्णकम् ।
तत्समं तालपुष्पञ्च चूर्णं दण्डोत्पलाभवम् ॥
कैरातं तत्समं देयं तत्समंचपलाभवम् ।
एतच्चूर्णं समाख्यातं ज्वरनागमयूरकम् ॥
प्रतिमाषमितं खाद्य युक्त्या वा त्रुटिवर्द्धनम् ।
सन्ततादि ज्वरं हन्ति साध्यासाध्य न संशयः ॥
त्रयोद्भवञ्च धातुस्थं कामशोकोद्भवं ज्वरम् ।
भूतावेशज्वरञ्चैवमभिचारसमुद्भवम् ॥
दाहशीतज्वरं घोरं चातुर्थादिविपर्य्ययम् ।
जीर्णञ्च विषमं सर्वं प्लीहानमुदरं तथा ॥
कामलां पाण्डुरोगञ्च शोथं हन्ति न संशयः ।
भ्रमं तृष्णाञ्च कासञ्च शूलानाहौ क्षयं तथा ॥
यकृतं गुल्मशूलञ्च आमवातं निहन्ति च ।
त्रिकपृष्ठकटीजानुपार्श्वानां शूलनाशनम् ॥
अनुपानं शीतजलं न देयमुष्णवारिणा ॥

( भैषज्यरत्नावली पृ० ३२ )

उपरोक्त सब अवतरण प्रायः 'भैषज्यरत्नावली' के हैं। प्रत्येक योग के नीचे ग्रन्थ का नाम दे दिया गया है । इन अवतरणों के प्रयोग करने से यह स्पष्ट विदित हो जावेगा कि आयुर्वेद के रसशास्त्रियों ने पारद का उपयोग किन किन रोगों में किस प्रकार किया है, और उनमें रोगनाशक शक्ति कितनी प्रबल है । पाश्चात्य-चिकित्सा-पद्धति के आधार पर शरीर के अवयवों पर इन योगों का रोगविशेष में किस प्रकार कार्य होता है यहभी अध्ययन कर लिया जाय तो ये योग संसार

व्यापी हो सकते हैं और इनके चमत्कारों का लाभ संसार के सब मनुष्यों को समान रूप से पहुंच सकता है।

पारद का उपयोग रस शास्त्रियों ने रोग-शमनोपाय में ही नहीं किया है किन्तु उसके मूल तत्वों के परिवर्तन की शक्ति का भी विशेष अध्ययन किया है। एक धातु का दूसरे धातु में कैसे परिवर्तन हो जाता है इसके कुछ उदाहरण के अवतरण नीचे दिये जाते हैं और जिनकी परीक्षा भी आधुनिक समय में करने से संसार के रसायन शास्त्र में नवयुग आरम्भ किया जा सकता है। ये अवतरण 'रसार्णवतंत्र' से दिये जा रहे हैं। इस तन्त्र का प्रकाशन स्वनामख्यात प्रातःस्मरणीय सर पी० सी० राय डी०एस-सी. पी-एच० डी० (Sir P.C. Ray D.Sc. Ph. D.) कलकत्ता निवासी ने दी एशियाटिक सुसाइटी आफ़ बेंगाल, की तरफ से कराया है। आप उसकी भूमिका में इस तन्त्र के विषय में जो विचार प्रकाशित करते हैं वे प्रत्येक वैद्य को स्मरण रखना आवश्यक हैं। इसलिए यहां उसका उद्धृत करना अप्रासङ्गिक न होगाः—

"While collecting materials for my History of Hindu Chemistry I was very much struck with the wealth of information and chemical knowledge of which "*Rasarnava*" is the repositary. Thus " Nature" in its review of "Hindu Chemistry" (*Vol. I*) speaking of the progress of chemistry in ancient India quotes two remarkable passages from Rasarnava.

'Copper yields a blue flame......that of

tin is pigeon coloured; that of Lead is pale-tinted'.

And as another example :—

'A pure metal is that which, when melted in a crucible, does not give off sparks, nor bubbles, nor spurts, nor emits any sound, nor shows any line on a surface, but is tranquil as a gem.' (See page 51—52 *vs.* 49—52 "Nature' 1903 *LXVIII*, **51)**.

Among the alchemical Tantras Rasarnava holds a unique position and I have referred to it in the following terms in the Introduction to the History of Hindu Chemistry *Vol. I. 2nd Ed. Intro. LXXXIII* :—

"It is to be regretted that of the several works quoted by Madhava Rasarnava alone seems to have survived to our days. This work is almost unknown in Bengal, and extremely rare even in Northern India and Deccan. We have been fortunate enough to procure a transcript of it in the Raghunath Temple Library, Kashmir, and another from the Oriental Mss. Library, Madras. As one of the earliest works of the kind, which throws a flood of light on the chemical knowledge of the Hindus about the 12th Century

A.D. Rasarnava must be regarded as a valuable national legacy. It has besides, the merit of being the inspirer of several works of intro-chemical period, notably '*Rasaratna-Samuchchaya*' and '*Rasendra-Chintamani*''.

इस लेख के देखने से इस तंत्र के योगों को सरलता से महत्व दिया जा सकता है। धातु के परिवर्तन करने के लिये अनेक प्रकार की रासायनिक क्रियाओं का वर्णन है। यद्यपि इस विषय के ज्ञान के लिये सुवर्ण और राजती विद्या विषयक रसतंत्रों के विशेष पाठ संग्रह कर आलोचना करना उपयुक्त है, तथापि दिग्दर्शन मात्र के लिए यहां कुछेक योग उद्धृत किये जाते हैं।

रसक्रामण

गण्डोलविषभेकास्य महिषाक्षिमलं तथा।
रुधिरेण समायुक्तं रस संक्रामणं परम्॥
विषं सुरेन्द्र गोपश्च रोचना गुग्गुलुस्तथा।
स्त्रीस्तन्यं चैव तैर्युक्तो लोहेतु क्रमतेरसः॥
श्रीखण्ड निम्ब निर्यास स्त्रीस्तन्यविषटङ्कणैः।
गोघृतेन समायुक्तो लोहेतु क्रमतेरसः॥
अरिवर्ग हतौ वङ्गनागौ द्वौ क्रामणं परम्।
मातृवाहः कुलीरश्च शङ्खाभ्यन्तरजो मलः॥
तथा कपित्थ निर्यासो रस संक्रामणं परम्।
क्रामणं रसराजस्य वेध काले प्रदापयेत्॥
क्रामणं यो न जानाति श्रमस्तस्यं निरर्थकः।

अतः परं प्रवक्ष्यामि हेमतारदलानि तु ॥
नाग सूतं समं घृष्टं गन्धद्वादशसंयुतम् ।
धत्तूरक रसे घृष्ट्वा गुटिका चणकाकृतिः ॥
तारस्य भागाश्चत्वारः शुल्वभागास्त्रयस्तथा ।
सम्यगावर्त्य देवेशि गुटिकैकां तु निक्षिपेत् ॥
अनेन क्रमयोगेन तारे ताम्रं तु वाहयेत् ।
यावत्तु जायते रक्तं तारं चैव न संशयः ॥
अस्य भागद्वयं ग्राह्यं तारस्य भाग पञ्चकम् ।
हेमभागैक संयुक्तं द्रुतं हेमाष्टकं भवेत् ॥
गन्धकेन हतं शुल्वं दरदेन समन्वितम् ।
आर्द्रकं मूलकं शुण्ठी लसुनं हिंगु माक्षिकम् ॥
मर्दयेन्मातुलुङ्गेन नागपत्राणि लेपयेत् ।
पुटेन म्रियते नागः सिन्दूरारुणसन्निभम् ॥
तत्तारे त्रिगुणे व्यूढं निर्बीजं कनकं भवेत् ।
गन्धपाषाण दरद तीक्ष्ण खर्पर सूतकैः ॥
भाग वृद्धैः समध्वाज्यैः पञ्चमांशेन लेपयेत् ।
पुटनाकृष्टकपुटनात् द्विधा तारस्य कृष्णता ॥
पीतगन्धक पाषाण निर्यासेन प्रलेपितम् ।
पुटत्रय प्रदानेन रजतं काञ्चनं भवेत् ॥
पीतकृष्णारुणगणं यथालाभं सुचूर्णितम् ।
गोसर्पिर्भावितं तारे वापेन श्वेत नाशनम् ॥
रक्तपीतासितगणं छागक्षीरेण भूयसा ।
सप्ताहं स्थापयेत्तारे निषेकाद्रक्ति वर्द्धनम् ॥
यदा वाप निषेकाभ्यां मार्जार नयनप्रभम् ।
तत्तारं दल संयुक्तं मेलनं परमं मतम् ।

शुल्वस्य कांस्य कृष्णां तु रसकेन तु रञ्जयेत् ॥
द्वौभागौ तस्य शुल्वस्य तारस्यैकं तु मेलयेत् ।
तदा तस्य रसेन्द्रस्य मेलनं परमं मतम् ॥
वेधयेत् शुद्धसूतेन शतांशेन सुरेश्वरि ।
हेम माक्षिक लवणं च पेषयेन्मधु सर्पिषा ॥
कुंकुमाभं भवेद्यावत् तेन नाग पुटे पचेत् ।
समं शुल्वं ततोदेयं तच्छुल्वं तारपत्रके ।
त्रिवारं शोधयेद्दत्वा शुद्धं हेमदलं भवेत् ॥
बङ्गं नागं तथा तीक्ष्णं शुल्वं तारञ्च पञ्चकम् ॥
त्रिवारं शोधयेद्दत्वा शुद्धं हेमदलं भवेत् ।
तालकं गन्धपाषाणं माक्षिकं खर्परं विषम् ॥
मातुलुङ्गयुतं लिप्त्वा बङ्गलोहं पुटे पचेत् ।
कुनटी गन्ध पाषाणं माक्षिकं सैन्धवं विषम् ॥
मातुलुङ्गयुतं लिप्त्वा नागलोहं पुटे पचेत् ।
सर्व्वं हेमदले बाह्यं हेम बद्धेन वेधयेत् ॥
तुल्यांशौ हेमकरिणौ तीक्ष्णं द्विगुणमेव च ।
व्यूढं रक्त गणैः सिक्तं तत्तारं कनकं भवेत् ॥
शुल्वं ताप्यहतं कृत्वा वरनागं तु रञ्जयेत् ।
तं नागं वाहयेत्तारे यावद्धेम दलं भवेत् ॥
विषं सूतसमं गन्धं त्रिगुणाञ्जन संयुतम् ।
अम्लेन त्रिदिनं पिष्ट्वा तारार्कौ वर्तयेत् समौ ॥
पक्वं पञ्चमृदाचैव पुटेत्तारावशेषितम् ।
एवं वा स्नपने नैव रञ्जयेत्तारमुत्तमम् ॥
भुजङ्गस्य च शुल्वस्य पृथगंश चतुष्टयम् ।
पृथग्द्वादश तैलस्य रीतिकातारयोर्द्वयोः ॥

कनकस्य तु भागैकं हेमतारावशेषितम् ।
मार्जाराक्षिप्रभं देवि वरं हेमदलं भवेत् ॥
ताराष्टकं ताम्र चतुष्कभागं,
नागद्वयं काञ्चनमेकभागम् ।
सर्व्वं ततो रक्त गणेन सिक्तं,
तारावशेषं कनकं करोति ॥
राजावर्त चतुर्थं च दरदञ्च प्रवालकम् ।
हेम माक्षिक संयुक्तं समभागानि कारयेत् ॥
रसकस्य त्रयो भागा मेषाक्षीरेण मर्दयेत् ।
वटिकां कारयेत् पश्चात् छायायां शोषयेत्ततः ॥
पञ्चद्रावक संयुक्तां शिला पट्टेन पेषयेत् ।
अनेन सिद्ध कल्केन तारारिष्टं तु योजयेत् ॥
प्रथमे सम कल्केन द्वितीयेतु तदर्धकम् ।
तृतीये पाद भागेन तारारिष्टं तु जायते ॥
पत्रे दाहे कषेच्छेदे हेम तच्चाक्षयं भवेत् ।
सूतकं दरदं ताप्यं गन्धकं कुनटी तथा ॥
गृहीत्वा क्रमवृद्धान्तु शुल्व पत्राणि लेपयेत् ।
चाङ्गेरी स्वरसे पिष्ट्वा दापयेत् पुट पञ्चकम् ॥
सच्चूर्णं वाहयेत्तारे हेमाकृष्टिरियं भवेत् ।
कनके योजयेद्देवि कृष्णवर्णं भवेत्ततः ॥
गोमूत्रेण निशां पिष्ट्वा शुल्वमावर्त्य सेचयेत् ।
शतधा शोधनेनैव भवेत् काञ्चन तारकम् ॥
अथ कांस्योद्धृतं ताम्रमारोटमथवा प्रिये ।
षड्गुणेन तु नागेन शोधयित्वा ततो बुधः ॥
शतार्द्धं सिन्धुवारस्य रसमध्ये तु ढालयेत् ।

कुष्माण्डस्य रसे पश्चात् सप्तवारं तु दापयेत् ॥
तथा तक्रे निशायुक्ते तप्ततप्तं च दापयेत् ।
शुकतुण्डं किंशुकाभं छेदे रक्तं मृदुं तथा ॥
ताप्येन वाप्यं कृत्स्नं तत् शुल्वं कालिकया गतम् ।
दरदं किंशुकरसं रक्तचित्रकमेव च ॥
हरिद्रे द्वे वरारोहे छागमूत्रेण पेषयेत् ।
दद्यान्निषेवणां शुल्वे सप्तवारं न संशयः ॥
शुल्वं सिन्दूरवर्णं च वरं हेमदलं भवेत् ।
द्विगुणौ तीक्ष्णभुजगौ घोषकृष्णं तु वाहयेत् ॥
अथवा यन्त्रकारस्य चैकद्वित्रिपलक्रमात् ।
त्रिपञ्चकं च नागस्य शुल्वस्य च पलं तथा ॥
ध्मातं यदवशिष्टं तत् तपनीयनिभं भवेत् ।
लाङ्गली चित्रकं शिग्रुर्निगुण्डी करवीरकम् ।
स्नुह्यर्क क्षीर चिञ्चाम्ल वज्रकन्द समन्विताम् ।
महिषीक्षीरसंयुक्तां सुरां देवि प्रकल्पयेत् ॥
स्नुह्यर्क क्षीर संयुक्तां शुल्वपत्राणि लेपयेत् ।
सुरायां प्रथमोक्तायां दिनमेकन्तु पाचयेत् ।
प्रागवलिप्ताग्निवर्णानि सुरायां सेचयेन्मुहुः ॥
आवर्तितानि बहुधा कुर्य्यात् कुण्डवराटकैः ।
सर्जिका सिन्धुदत्तश्च वपेत् कर्मसु योजयेत् ॥
रसकस्य पलैकं तु हेम माक्षिक संयुतम् ।
पाचनं कारयेत् पश्चात् ध्मातं कुङ्कुम सन्निभम् ॥
इन्द्रगोपसमं कल्कं पुटयोगेन जारयेत् ।
तत्कल्कं मधु संयुक्तं शर्करा टङ्कणान्वितम् ॥
एकीकृत्याथ संमर्द्य गव्यक्षीरेण पाचयेत् ।

प्रागेव शोधितं शुल्वं रसकल्केन रञ्जयेत् ॥
रञ्जयेत् त्रीणि वाराणि जायते हेम शोभनम् ।
भावयेन्मुनिपुष्पाणि करवीरं मनःशिलाम् ॥
तत्पूर्वं रञ्जितं शुल्वं शिलया च तथा युतम् ।
अन्धमूषागतं ध्मातं जायते हेम शोभनम् ॥
तेनैव रसकल्केन तारपिष्टं तु कारयेत् ।
सेचयेत् कङ्गुणी तैले तद्दिव्यं कनकं भवेत् ॥
अर्जुनी लाङ्गली पद्मचारिणी शक्रवारुणी ।
सुवर्णा चौषधीभिश्च गैरिकेण तु पार्वति ॥
विलिप्तं शुल्वपत्रं तु निषिक्तं कनकं भवेत् ।
मयूरग्रीवतुत्थं च कुंकुमं रसकं तथा ॥
बालवत्सपुरीषञ्च विषं हालाहलं तथा ।
रक्तचित्रक चूर्णञ्च सम भागानि कारयेत् ॥
मर्दयेन्मध्यमाम्लेन छाया शुष्कं तु कारयेत् ।
मधुना सह संयोज्य नागपत्राणि लेपयेत् ॥
मूकमूषागतं ध्मातं नागं रञ्जयति क्षणात् ।
शाकपत्ररसेनैव सप्तवारं निषेचयेत् ॥
अष्टाविंशति कृत्वा वा तैले भूनागसम्भवे ।
तन्नागं जायते दिव्यं देवाभरणभूषणम् ॥
अथवा भूलताचूर्णं नागचूर्णं समांशकम् ।
अन्धमूषागतं ध्मातं तैले तप्तं निषेचयेत् ॥
एवं कृते सप्तवारं भवेत् षोडश वर्णकम् ।
बालवत्सपुरीषं च लाक्षा गैरिक चन्दनम् ॥
हंसपादाख्य दरदं विल्वमज्जा गुडस्तथा ।
राजावर्तं च कंकुष्ठं शाकपल्लववारिणा ॥

भुजङ्गं कनकं कुर्य्याच्छतवारं निषेचनात् ।
मञ्जिष्ठा रजनी द्वन्द्वं कांक्षी कनक माक्षिकम् ।
कौसुम्भं विषसिन्धूत्थं दरदं रक्तचन्दनम् ॥
शाकपल्लव पालाशकुसुमैः सह संयुतम् ।
सेचनाच्छतवारेण नागं रञ्जयति प्रिये ॥
कंकुष्ठं गन्धपाषाणं रजनी द्वितयं तथा ।
भावयेत् सप्तवारांश्च चामीकर रसेन तु ॥
निषिक्तं शिंशपा तैले सप्तधा प्रतिवापितम् ।
नागं रञ्जति च क्षिप्रं रञ्जितश्चाक्षयं भवेत् ॥
विद्रुमं दरदं तीक्ष्णं अनेन प्रतिवापितम् ।
मञ्जिष्ठा किंशुकरसे शाके चैव निषेचयेत् ॥
प्रतिवाप निषिक्तञ्च क्रमेणानेन रञ्जितः ।
भुजगो हेमतां याति नात्रकार्या विचारणा ॥
उक्तं हेमदलं देवि वरं तारदलं श्रृणु ।
श्वेताभ्रं काञ्जिके स्विन्नं त्रिवारं पुटितं ततः ॥
स्वल्पटङ्कण वङ्गञ्च शुद्धशुल्वे तु वापयेत् ।
पञ्चमांशेन मिश्रं तत् तारं तालं च वेधयेत् ॥
रस सैन्धव मेकैकं तिले सर्जी द्वयं द्वयम् ।
टङ्कैकं कनकरसे मर्दयेद्दिवसत्रयम् ॥
तेन लिप्तं ताम्रपत्रं धमेदावर्त्तितं पुनः ।
इङ्गुदं सतालमूलं दध्यम्लेन तु पेषयेत् ॥
तन्मध्ये ढालयेच्छुल्वं सप्तवारं दलं भवेत् ।
तृतीयांशेन बीजस्य मेलयेत् परमेश्वरी ॥
लाङ्गली चित्रको दन्ती द्वयघ्नोत्तरवारुणी ।
गोधावती वज्रवल्ली श्वेतार्कः श्वेतवारुणी ॥

विष्णुक्रान्ताश्वगन्धा च शिग्रपञ्चांगुली तथा ।
पुनर्नवा अपामार्गी इङ्गुदी चक्रमर्दकः ॥
गुडूची चैव हिस्रा च एकद्वित्रि चतुर्थकः ।
महिषी क्षीर सन्धानात् सप्ताहादुपरि प्रिये ॥
निषेके क्रियमाणेतु जायते शुल्व शोधनम् ।
तालं षोडसभागेन शुल्वपत्राणि लेपयेत् ॥
स्थापयित्वान्धमूषायां त्रिधा चावर्तयेत् पुनः ।
शुक्लवर्गस्त्रियाक्षारं शङ्ख सैन्धव सर्जिकाः ॥
दन्ता कपर्दाः कम्बुश्च शुक्तयः शुल्वघापनाः ।
पादमे तत्सुरासेकैर्जायते नखरांकुरम् ॥
त्रयोऽयस्कान्त भागाःस्युरारताराद्वयं तथा ।
वङ्गस्य दश भागास्युस्तार वेधेन वेधयेत् ॥
आरस्य द्विगुणं तारं तारात् कान्तं चतुर्गुणम् ।
कान्तादष्टगुणं वङ्गं तारवेधेन वेधयेत् ॥
तालं सूतं समं कृत्वा वज्रीक्षीरेण मर्दितम् ।
पुटं दत्वा तु यन्त्रेण सत्वं पतति शोभनम् ॥
वङ्गमावर्त्य देवेशि वज्रीक्षीरेण पेषयेत् ।
एकविंशति वाराणि वङ्गशोधनमुत्तमम् ।
तद्वङ्गं जारयेत् सूतं समं वा द्विगुणादिकम् ॥
भल्लातराजिका तैलशंखं चूर्णविडेन च ।
नागवङ्गौ भवेत्तेन समं वङ्गेन सारणात् ॥
क्षारोदक निषेकाच्च तद्वद्वीजमनेकधा ।
तमुपायं प्रवक्ष्यामि मार्दवं येन जायते ॥
घृतं दधि पयः क्षौद्रं विल्वजम्बीरकद्रवैः ।
गुडस्तिल समायुक्तं निषेकात् मृदुकारकैः ॥

गजदन्ता हय नखा मेषशृङ्गं च सैरिभम् ।
कम्बु निर्यास संयुक्तं सप्तवारं निषेचयेत् ॥
सहस्रधा विस्फुटितं दलं भजति मार्दवम् ।
ज्योतिष्मति कुसुम्भानां तैले कारञ्जकेऽपिवा ॥
निषेक शस्यतेऽत्यर्थं कनकस्य विचक्षणैः ।
आवर्त्यमानं तारे च यदि तन्नैव निर्मलम् ॥
काचटङ्कण वापेनं क्षिप्रं निर्मलतां व्रजेत् ।
मधूक मधुमेषाज्य सौराष्ट्री गुड़ सैन्धवैः ॥
शुक्ति कम्बु खुरावापं चन्द्रार्क मृदु जायते ।
मधुतैलघृतैश्चैव वासमूत्रे निषेचनात् ॥
जायते खरसत्त्वानां दलानामपि मार्दवम् ।
विश्वारसेन सामुद्रैः क्षीरे चार्कस्य वह्निना ।
विशुद्धं जायते तारं शङ्ख कुन्देन्दु सन्निभम् ॥
यदि तन्निर्म्मलं नैव तदा तद्वत् पुनः पचेत् ।
विधिरेष समाख्यातस्तारकर्मगणपूजितः ॥
कंगुणी तैल मञ्जिष्ठा हरिद्राद्वय कुंकुमम् ।
निषेकात् कुरुते हेम बालार्क सदृशप्रभम् ॥
शुल्वार्द्धं गन्धकं दत्वा तदर्द्धं मृत सूतकम् ।
चाङ्गेरी स्वरसे नैव मर्द्दयेद्द्वासरत्रयम् ॥
प्लुतं चित्ररसेनैव लेपयेद्धेमपाण्डुरम् ।
पक्त्वा पञ्चमृदा देवि हेमोत्कर्षणमुत्तमम् ॥
हेमशुल्वं तथा तीक्ष्णं समभागानि कारयेत् ।
अन्धमूषा गतं ध्मातं खोटो भवति तत्क्षणात् ॥
खोटस्य भागमेकं तु रसहेम समन्वितम् ।
पाचयेदनुजाम्लेन यावत् कुङ्कुम सन्निभम् ॥

शतांशेन तु तेनैव वेधयेद्धेमपाण्डरम् ।
जायते कनकं दिव्यं त्रिवर्गोत्कर्षणं भवेत् ॥
यावच्छुद्धं भवेत्तावत् पुटेल्लवण भस्मना ।
रक्ततैलं निषिक्तव्यं जायते हेम शोभनम् ॥
मर्दितं कटुतैलेन स्वर्णगैरिकगन्धकम् ।
अथवा मातुलुङ्गाम्ल राजावर्तक माक्षिकम् ॥
अथवा विट कपोतस्य राजावर्तक सैन्धवम् ।
पुटनाच्छ्वेत कनकं कुरुते कुंकुमप्रभम् ॥
राजावर्त्तस्य चूर्णं तु शिरीष कुसुमद्रवैः ।
भावितं बहुशः क्षिप्तम् शीतयमंशेन वर्णदः ॥
रसोपरसवर्गं तु निर्वहेन्नाग वङ्गयोः ।
नागवङ्गौ पुनः शुल्वे शुल्वं तारे तु निर्वहेत् ॥
तारं निषिक्तं देवेशि रक्ततैले पुनः पुनः ।
जायते हेम कल्याणं सर्वदोष विवर्जितम् ॥
उद्घाटं कथयिष्यामि रस विद्धं त्र पन्नगम् ।
घोषाकृष्टं तु यत् शुल्वं षोडशांशेन योजयेत् ॥
एकीकृत्य समावर्त्य छागमूत्रेण सेचयेत् ।
सर्व्वदोष विनिर्मुक्तं जायते हेम शोभनम् ॥
लोह वेध इतिख्यातो विस्तरेण सुरेश्वरि ।
यथा लोहे तथादेहे कर्त्तव्यः सूतकः सदा ॥
समानं कुरुते देवि प्रविशन् देहलोहयोः ।
पूर्व्वं लोहे परीक्षेत ततो देहे प्रयोजयेत् ॥

( रसार्णव सप्तदश पटल )

ऊपर के अध्याय के वर्णन से यह स्पष्ट है कि प्राच्य आर्य-रस-शास्त्रियों ने पारद का प्रयोग केवल औषधिवर्ग में ही

नहीं किया किन्तु उसको धातुओं की मौलिकता के परिवर्तन में भी अनेक प्रकार से व्यवहार कर रासायनिक ज्ञान को उच्च-कोटि का अविष्कार करके जगत् गुरु बनने का सच्चा मार्ग प्रदर्शित किया था। आजकल पाश्चात्य रसायन-शास्त्र के अध्ययन में भी इसी प्रकार का मौलिक कार्य हो रहा है; हन्त ! हम ऋषि सन्तान कहलाने वाले प्राचीन-शास्त्र की मौखिक प्रशंसा करते हुये भी इतना कार्य नहीं करते कि जिससे अवशिष्ट ज्ञान को प्रत्यक्ष कर सत्यासत्य का निर्णय कर संसार को यह दिखा दें कि आयुर्वेद शास्त्र के प्रत्येक वाक्य और वाक्यांश नित्य सत्य पर अवलम्बित हैं और वह सत्य पुरुषार्थ करने में सरलता पूर्वक सर्वावस्था में प्रत्यक्ष किया जा सकता है। मैने इस अध्याय में औषधि-योग केवल इसलिये दिये हैं कि वैद्यबन्धु खनिज-हिङ्गुल से पारद निकाल कर और जहां केवल हिङ्गुल का योग है वहाँ पर खनिज हिङ्गुल का ही प्रयोग कर भिन्न भिन्न रोगों पर इन योगों की विशेष परीक्षा कर यह निर्णय करें कि ये औषधियां वस्तुतः उल्लिखित रोगों में किन किन दशाओं में कितना कितना लाभ करती हैं और लाभालाभ का शतांशिक फल क्या रहता है। ऐसा करने से सबसे अधिक लाभ यह होगा कि सिद्ध योग सब प्रकार के ज्ञान वाले भाइयों को एकत्र प्राप्त हो जावेंगे और सारे देश में एक रोग की एक या दो निश्चित औषधियां सर्वत्र वैद्य व्यवसायियों के यहां सदा तय्यार मिल सकेंगी। पाश्चात्य चिकित्सा की उन्नति का यह एक बड़ा कारण है कि उनके योग निश्चित हैं और

एक चिकित्सक का व्यवस्थापत्र संसार के किसी कोने में प्राप्त कर लाभ उठाया जा सकता है, तद्विपरीत हमारे देश में एक ही नगर या ग्राम में एक वैद्य दूसरे वैद्य की बनाई हुई औषधि व्यवहार नहीं कर सकता। ऐसी दशा में एकता कैसे हो सकती है। इस सन्देह का कारण द्रव्य और योगों का अनिश्चय ही है। इसलिये प्रत्येक वैद्यबन्धु का यह कर्त्तव्य होना आवश्यक है कि वे अपनी और अपने व्यवसाय की भलाई के लिये सतत प्रयत्न कर द्रव्य और योगों का निर्णय कर निश्चित द्रव्य को ही व्यवहार में लाने का दृढ़ प्रयत्न करें। इस अध्याय के योग किस रोग में विशेष अनुभूत हैं, इसकी रोगानुसार सूची अन्त में दे दी गई है जिससे शीघ्र प्रयोग निकालकर बनाने और उपयोग करने में सरलता हो सके।

मैंने इस अध्याय के सङ्कलन में जो विशेष कार्य किया है वह है लुप्तप्राय पारद के अनेक खनिजों का वर्णन। खनिजों के वर्णन से तीन बातों पर विशेष प्रकाश पड़ता है। एक तो रसांजन के विषय में। "रसरत्न समुच्चय" के संग्रह कर्ता ने स्पष्ट लक्षण लिखा है कि "रसाञ्जनं च पीताभं विष नेत्रगदापहम्" यहां पर 'पीताभ' शब्द स्वरूप वाचक है किंतु जहाँ जहाँ योगों में रसांजन शब्द आता है वहां वहां वैद्य व्यवसाई दारुहरिद्रा जन्य रसौत नामक कृष्ण वर्ण की रस-क्रिया को लेते हैं जो न धातु है न पीतवर्ण ही। धातु और खनिज प्रकरणोक्त विषय में इतना भ्रम कर द्रव्यान्तर लेना हमारे खनिज शास्त्र के अज्ञान से कितनी हानि हुई है उसका यह ज्वलन्त उदाहरण है। रसांजन का जहां रसयोगों में प्रयोग है वहां पर नेत्ररोग नाशक 'येलो मर्क्युरिक ऑक्साइड'

( *Yellow Mercuric Oxide, HgO.*) ही काम में लाना चाहिये। आजकल पाश्चात्य चिकित्सा में नेत्ररोगों के अन्दर इसका बाहुल्य से प्रयोग है। यह खनिज-शास्त्र की परिभाषा के अनुसार "मोन्ट्रोयडाइट" कहलाता है ( देखो पृष्ठ २२ ) इसी प्रकार स्रोतोंजन का निर्णय भी पारद के खनिज जाने बिना नहीं हो सकता ( देखो पृष्ठ १९-२० )। कृष्ण हिंगुल, प्रवालाभ हिंगुल, दैत्येन्द्र रक्त, नाम से जो खनिज हिंगुल भिन्न भिन्न देशों में मिलता था उसका सर्वथा अभाव हो गया है। इसी प्रकार रसपुष्प ( केलोमल ) जो आयुर्वेदीय द्रव्य है उसे पाश्चात्य चिकित्सक काम में लाते हैं और हमारे यहां इस का प्रयोग एकदम बन्द हो गया है। यह अत्यन्त चिन्तनीय है। अब इस अध्याय के पारदीय खनिज-पढ़ने से पता लगेगा कि हमारे प्राचीनों ने अर्वाचीन खनिज शास्त्रों से भी कितना अधिक गंभीर ज्ञान प्राप्त किया है। यदि इसी प्रकार प्राच्य और प्रतीच्य का तारतम्य, ज्ञान के लिये सर्व प्रकार से प्रयत्न होता रहा तो पाठक देखेंगे कि आयुर्वेद शास्त्र का यशःसूर्य फिर किस प्रकार चमकने लगता है। आशा है वैद्यगण पारदादि खनिजों का उचित ज्ञान प्राप्त कर इसके प्रचार में हार्दिक सफल प्रयत्न करेंगे।

उदयपुरवास्तव्यरावोपाह्वकविराज श्रीप्रतापसिंह कृत

रसविज्ञानीयः प्रथमोऽध्यायः समाप्तः।

# आयुर्वेदीय खनिज विज्ञान

## द्वितीय अध्याय

---

### गन्धक ( Sulphur—सल्फर )

---

इस मूलतत्व ( Element ) का ज्ञान सांसारिक प्राणियों को कब से है ; इसके ऐतिहासिक वृत्त का व्योरा अभीतक प्राप्त नहीं हुवा है । संभवतः इस तत्व का ज्ञान भ्रमणशील रसायन प्रेमियों ने ज्वालामुखी, उष्णस्रोत, गोदन्ती के क्षेत्रप्रभृति प्रदेशों में उग्र गंध और ज्वलनशक्ति देखकर अन्वेषण किया हो, इसीलिये प्राचीन आर्य रसायन ग्रन्थों में "गन्धक" नाम से ही इसका अभिधान किया गया है, गन्धक के उत्पत्ति प्रकरण में लिखा है कि :—

> निजगन्धेन तान्सर्वान् हर्षयन्दैत्यदानवान् ।
> ततो देवगणैरुक्त गन्धकाख्यो भवत्वयम् ॥"

इसी प्रकार पाश्चात्य वैज्ञानिक साहित्य में ज्वलन शक्ति के कारण इसको सल्फर ( Sul=Sal=Salt, Fur=fire ) अर्थात् ज्वलन-शील-लवण के अभिधान से संबोधित किया है ।

गन्धक प्रायः ज्वालामुखी प्रदेशों में स्वतंत्र दशा में पाया जाता है। मिस्चरलिच (Mitscherlich) नामक विद्वान ने सर्व प्रथम योरोप में गन्धक की अनेक प्रकार की परिवर्तित रासायनिक दशाओं का ज्ञान प्राप्त करने का प्रयत्न किया था। गंधक का प्रयोग भारतवर्ष में अति प्राचीन काल से किया जा रहा है। रस ग्रन्थों के अवलोकन से विदित होता है कि आर्य-रसायन-विज्ञों ने भी ब्योरेवार इसके रासायनिक परिवर्तन और गुणों का अध्ययन किया, तथा उनका औषधि में उपयोग कर जन समुदाय का बड़ा उपकार किया था। किंतु इस ब्योरे से यह प्रगट नहीं होता कि गन्धक का क्रमबद्ध अध्ययन करने वाला महापुरुष कौन था और किस समय में वह वर्तमान रहा। यह ऐतिहासिक वृत्त अन्वेषणीय है।

गन्धक उन थोड़े से मूलतत्वों में गिना जाता है जो प्रकृति में स्वतंत्र रूप से पर्याप्त मात्रा में पाये जाते हैं। यह प्रशान्त या प्रज्वलित ज्वालामुखी प्रदेशों में आधिक्य से प्राप्त होता है। योरोप में इटली ( Italy ) सिसली ( Sicily ) आइसलेन्ड ( Iceland ) आदि देशों में बहुतायत से मिलता है। असाधारणतया अन्य खनिजों के साथ में भी यह यौगिक रूप में पाया जाता है। कहीं कहीं हाइड्रोजन गेस के साथ "सल्फ्युरेटेड हाईड्रोजन ( Sulphurated Hydrogen ) के रूप में उष्णस्रोतों में पाया जाता है। ऐसे स्रोत बद्रीनाथजी की यात्रा के मार्ग में प्रायः देखे जाते हैं। अन्यत्र भी भारतवर्ष के बिहार, बंगाल, आसाम, मद्रास आदि प्रान्तों में तीर्थों के स्थानों में प्रायः ऐसे उष्णस्रोत मिला करते हैं। ऐसे स्रोतों में गन्धक की उग्र गन्ध होती है। यौगिक-गन्धक "सल्फाइड"

( Sulphide ) के रूप में अनेक खनिजों के साथ में मिला रहता है। उनमें से प्रधान निम्न लिखित समझे जाते हैं।

१ रौप्यमाक्षिक ( Iron Pyrites ) लौहमाक्षिक
२ सुवर्णमाक्षिक ( Copper Pyrites ) ताम्रमाक्षिक
३ कांस्यमात्तिक ( Arseno Pyrites ) तालमाक्षिक
४ कान्तमाक्षिक ( Pyrrhotite ) चुम्बकीय लोहमाक्षिक
५ विमल ( Marcasite Pyritous ) लौहमाक्षिक ( विशिष्ट रूप युक्त )
६ गन्ध नाग ( Galena ) नीलाञ्जन.
७ गन्धयशद ( Zinc blende ) यशद का खनिज.
८ गन्धवरनाग ( Stibnite )
९ गन्धरजत ( Argentite ) रजत खनिज.
१० हिंगुल ( Cinnabar ) पारद का खनिज.
११ गोदन्ती ( Gypsum ) गन्धक का खनिज.
१२ बेरियं सल्फेट ( Heavy Spar ) बराइट.
१३ बोर्नाइट ( Bornite ) पाषाणस्वरूप ताम्रमाक्षिक.

उक्त खनिजों की मात्रा किसी किसी स्थान पर बहुत व्यापक और बड़ी तादाद में पाई जाती हैं। स्वतन्त्र तथा अन्य खनिजों के साथ में मिला हुआ गन्धक प्रायः पृथ्वी के सर्वांश में पाया जाता है।

बनस्पतियों में भी नीचे लिखे गणों में प्रायः गन्धक मिला रहता है:—

राईवर्ग, गाजरवर्ग, लहसुनवर्ग, इनके रस और बीजों के तैल में सल्फेट ( Sulphate ) और सल्फाइड ( Sulphide ) के रूप में गंधक पाया जाता है।

प्राणि वर्ग में भी यह रक्तादि धातुओं में अत्यल्प प्रमाण से मिला रहता है। पित्त में २५ फी सदी गन्धकांश गन्धक के तेज़ाब के रूप में विद्यमान है।

प्रकृति में अनेक प्रकार की रासायनिक प्रतिक्रियाओं से गंधक पैदा होता है। माक्षिक के ऑक्सिडेशन से भी गन्धक पृथक् होकर जहाँ माक्षिक के कण घुले रहते हैं, वहाँ पर के कोष्ठों में जमा पाया जाता है। जहाँ पर ज्वालामुखी की कन्दराओं से अनेक प्रकार की गन्धकीय गैसें ऊपर की ओर निकलती हैं, वहाँ पर 'सल्फर डाई ऑक्साइड' और 'हाइड्रोजन सल्फाइड' की प्रतिक्रिया से गन्धकाम्ल और गन्धक उत्पन्न होता है। ( $H_2S$ हाइड्रोजन सल्फाइड $\times 2 SO_2$ सल्फर डाई ओक्साइड $=$ $H_2SO_4$ गन्धकाम्ल और $2S$ गन्धक ) कहीं कहीं संभवतः हाईड्रोजन सल्फाइड और आक्सिजन की अपूर्ण प्रतिक्रिया से गन्धक बनता है। ( $2H_2SO$ हाइड्रोजन सल्फाइड $+ O_2$ ओक्सिजन की प्रतिक्रिया से $2H_2O$ जल और $2S$ गन्धक ) अथवा सल्फर डाई ऑक्साइड और जल की प्रतिक्रिया से गन्धकाम्ल और गन्धक पैदा होता है। ( $3SO_2 + 2H_2O = 2H_2SO_4 + S$ ) इस प्रकार से उत्पन्न हुआ गन्धक का बड़ा जमाव 'अबासनो-बेरी माइन होकैडो जापान* में गन्धक निकालने के लिये काम में लाया जा रहा है। यह जमाव पुराने सूखे ज्वालामुखी सम्बन्धी मृत्तिकामय तालावों के क्षेत्र के साथ पाया गया है। इस जमाव से बहुत बड़ी मात्रा में गन्धक निकाल कर युनाइटेड स्टेट को भेजा जाता है। इसी प्रकार के जमाव जो मेक्सिको

* Abosanoberi Mine, Hokkaido, Japan.

( Mexico ) आदि प्रदेशों में पाये जाते हैं, उनका भी उपयोग करने का प्रबन्ध किया जा रहा है। सब से अधिक गन्धक खुश्क या तर उष्णस्रोतों के आस पास में पाया जाता है। ऐसे स्थानों में हाइड्रोजन सल्फाइड के अपूर्ण ऑक्सिडेशन से अथवा गन्धकोत्पादक जीवाणुओं की प्रतिक्रिया से उत्पन्न होता है। इस रीति से उत्पन्न हुए गन्धक के जमाव अमेरिका के पश्चिमी राज्यों में प्रायः मिलते हैं, उदाहरण के लिये "कुपराइट" (Cuprite) इस्मेरेल्डा कौन्टी ( Esmeralda County ) नवाडा (Navada) सल्फरबैंक कॅलिफोर्निया ( Sulphur Bank, California ) रेबिट होल माइन्स हम्बोल्ट-कौन्टी (Rabbit Hole Mine's Humboldt county) उटाह ( Utah ) कौडी ( Cody ) थर्मोपोलिस ( Thermopolis ) व्योमिंग ( Wyoming ) जिलों के नाम लिखे जा सकते है। अन्त के तीन जिलों में गन्धक निकालने का व्यवसाय प्रारंभ हैं। व्योमिंग जिले में जो गन्धक प्राप्त होता है वह अल्पांश में चूने के साथ पाया जाता है। यहाँ का जमाव गहरा नहीं है, तथापि व्यापार चलाने लायक समझा जाता है।

संसार में जितना भी प्राकृतिक गन्धक प्राप्त होता है वह ज्वालामुखी या उष्ण स्रोतों के उद्गम से ही निकलता नहीं है किन्तु सब से अधिक निक्षिप्तस्तरों के जमाव ( Sedimentary beds ) में पाया जाता है, और ऐसे जमावों का घनिष्ट सम्बन्ध गोदन्ती (Gypsum) व सुधापाषाण (Lime Stone) के साथ रहता है। इनके अतिरिक्त कालसाइट (Calcite) अरेगोनाइट ( Aragonite ) ओपल (Opal) और कभी कभी स्फटिक ( Quartz ) आदि के साथ गन्धक मिला प्राप्त

होता है। गैसीय और घन हाइड्रोकार्बन ( Gaseous and Solid Hydrocarbons ) के साथ में भी गन्धक का सहयोग देखा गया है। संसार के बड़े बड़े गोदन्ती के क्षेत्रों के साथ विशेष रूप से गन्धक का सम्बन्ध सदा और सर्वत्र पाया जाता है, चाहे रासा सम्बन्ध व्यापारोपयोगी गन्धक निकालने का कार्य न दे तथापि गन्धक उत्पत्ति का यह नित्य सम्बन्ध सर्वत्र दिखाई देता रहेगा। इस विषय का विशेष ज्ञान प्राप्त करना हो तो लुसियाना ( Louisiana ) के बोरिंग ( Boring ) का विवरण जो उक्त स्टेट की सर्वे के बुलेटिन में प्रकाशित हुआ है, मंगाकर अवलोकन करना चाहिए। इस विवरण के देखने से गोदन्ती और गन्धक का अविरत जन्य जनक सम्बन्ध भली प्रकार विदित हो जाता है। गन्धक गोदन्ती और चूने के साथ शिरा, मृत्तिका, राल की शकल का तथा रवों आदि के रूप में जमा पाया जाता है।

## गोदन्ती से गन्धक की उत्पत्ति

प्रकृति में अधिकांश में गन्धक निःसन्देह गोदन्ती से पृथक होकर अपना पीत वर्णमय स्वरूप धारण करता है। इस विश्लेषणात्मक उत्पत्ति का कारण एक जातीय गन्धकोत्पादक जीवाणु हैं। इन जीवाणुओं की रासायनिक प्रतिक्रियाओं से गोदन्ती का कालिशयं सल्फाइड और हाइड्रोजन सल्फाइड में परिवर्तन होता है इस प्रकार के परिवर्तन के ब्योरे में अनेक मत भेद हैं। तथापि यह निश्चित है कि यह परिवर्तन मन्दताप पर होता है। जी. बिस्काफ़ ( G. Bischof ) नामक विद्वान ने सर्व प्रथम इस विषय पर वाद किया

और नीचे लिखे रासायनिक परिवर्तनों को स्थिर करने में समर्थ हुआ। इन परिवर्तन सूचक सूत्रों को यहाँ अंग्रेजी शब्दों में ही व्यक्त करना उचित प्रतीत होता है क्योंकि अभी तक इनके सर्वमान्य पर्य्यायद्योतक शब्द हमारी भाषा में निश्चित नहीं हुये हैं। सन्देहस्थल पर पाठक रासायनिक तत्वज्ञों से व्योरा समझने का कष्ट उठावें।

$CaSo4-2H_2O+2C \quad = Ca\,S \quad + 2CO_2 \quad + 2H_2O$

गोदन्ती जल कार्बन कालसियं सलफाइड कार्बन डाई आक्साइड जल

$Cas \quad + CO_2 \quad + H_2O \quad = Ca\,CO_3 \quad + H_2S$

कालसियं सलफाइड कार्बन डाई आक्साइड जल कालसियं कर्बोनेट (सुधापाषाण) हाइड्रोजन सलफाइड

$2H_2\,S \quad + O_2 \quad = 2H_2O \quad + 2S$

हाईड्रोजन सलफाइड आक्सिजन जल गन्धक

इस प्रकार के निर्णय के विपरीत विचार वालों का मत है कि गन्धक प्रायः हजारों फुट की गहराई पर उत्पन्न होता है। उक्त परिवर्तन के लिये इतना आक्सिजन वहां मिलना प्रायः असम्भव है इसलिये उनकी राय है कि सम्भवतः हाइड्रोजन सलफाइड जो गोदन्ती से निकलता है वह कालसियं कार्बोनेट पर रासायनिक प्रतिक्रिया करता है। जिससे पुनर्भव गोदन्ती ( सेकेन्डरी Secondary ) और गन्धक उत्पन्न होता है।

सिसली ( Sicily ) का गंधकीय जमाव वाद विवाद का बहुत बड़ा क्षेत्र रहा है।

आ० वान० लासो ( A. Von. Lasawl ) नामक रसायनज्ञ का विचार है कि सिसली का गन्धकीय जमाव निर्मल तालावों के जल में हाइड्रोजन सल्फाइड मिश्रित जल स्रोतों के मिलने से हुआ है। जी. स्पेजिया ( G. Spezia ) नामक विद्वान का भी अभिप्राय है कि गन्धक युक्त उष्ण श्रोतों के जल मिश्रण से ही समुद्र की तटी में गन्धक का जमाव हुआ हैं। श्रो-स्टुजर ( O. Stutzer ) नामक भूगर्भ-शास्त्रज्ञ ने सिसली के निक्षिप्तस्तरवर्ति गन्धकीय जमाव के विषय में अभी हाल ही में यह विचार प्रकट किया है कि गन्धक किसी भी स्थिर जलाशय में हाइड्रोजन सल्फाइड के उत्पन्न होने से जमा हो सकता है।

हाइड्रोजन सल्फाइड गैस स्थिर जलाशयों में जीवाणुओं के सड़ाव के कारण अथवा विलीन काल्सियं सल्फेट पर कार्बन, व हाइड्रोकार्बन की प्रतिक्रिया से पैदा होता है। इस प्रकार हाइड्रोजन सल्फाइड गैस के उत्पन्न होने पर वायवीय आक्सिजन के प्रभाव से या जीवाणुओं के कारण हाइड्रोजन सल्फाइड गैस का हाइड्रोजन ऑक्सिजन के साथ मिलकर जल उत्पन्न करता है और गन्धक बारीक चूर्ण के रूप में नीचे तली में बैठ जाता है। इसी प्रकार की रासायनिक क्रिया से धीरे धीरे गन्धक का बड़ा निक्षिप्तस्तर जम जाता है।

इसी प्रकार जलीय वनस्पतियों के सड़ाव से अनेक जीवाणु सल्फेड से हाइड्रोजन सल्फाइड बनाते हैं। हाइड्रोजन सल्फाइड को गंधकीय जीवाणु (Sulphur Bacteria) ऑक्सिजन युक्त करके अपने कोष्ठों में बारीक बारीक गन्धक का

चूर्ण जमा करते रहते हैं । इस प्रकार का हाइड्रोजन सल्फाइड का ऑक्सिडेशन गन्धकीय जीवाणुओं की प्राण रक्षा करता है और इसी तरह की प्रतिक्रिया से जो गन्धकाम्ल पैदा होता है, वह कार्बोनेट की रासायनिक प्रतिक्रिया से, सल्फेट के रूप में परिवर्तित हो जाता है और वह शोषित होकर जीवाणुओं की बृद्धि में सहायक होता है ।

ये गन्धकीय जीवाणु गन्धक के स्रोत, समुद्र और तालाबों के कीचड़ में पाये जाते हैं जहां पर हाइड्रोजन सल्फाइड उत्पन्न होता रहता है । स्टुजर की यह भी सम्मति है कि कालासमुद्र ( Black Sea ) के स्थिर जल में गहराई के साथ हाइड्रोजन सल्फाइड की मात्रा बढ़ती हुई मालूम होती है । इस स्टुजर के सिद्धांत के साथ डबल्यु. एफ. हन्ट. ( W. F. Hunt ) नामक विज्ञ भी सहमत है और उसने गन्धकीय जीवाणुओं का प्रभाव विस्तार के साथ लिखा भी है । तथापि इस प्रकार के निक्षिप्त स्तर से जमने वाले गन्धक विषयक सिद्धांत निश्चित नहीं समझे जा सकते क्योंकि गोदन्ती के जमाव से गन्धक का बनना इतना व्यापक है कि उसमें सन्देह नहीं किया जा सकता और ब्लेक-सी में गन्धक जमने का उपयुक्त साधन रहते भी समुद्र की गहराई के रुख खुदाई करने पर गन्धक प्राप्ति का चिह्न दिखाई नहीं देता, इसलिये स्टुजर के सिद्धांत मनन करने योग्य होने पर भी अभातक विद्वानों का इनमें सन्देह बना हुआ है ।

मेडिटेरेनियन (Mediterranean) प्रदेशों में सर्वत्र व्यापक रूप से गोदंती के साथ गन्धक पाया जाता है । इस प्रकार के गन्धक का प्राप्ति-स्थान मुख्यतः सिसली (Sicily) है ।

सिसली से लाखों मन गन्धक निकाल कर वर्षों से संसार की अधिकांश मांग पूरी की जा रही है।

सिसली के निक्षिप्तस्तर से बनी चट्टानें कुछ सामुद्रिक और कुछ पार्थिवस्तरों से बनी हुई हैं। ये चट्टानें क्ले ( Clay ) से बनी हुई हैं, जिन पर डाइटोमोसियस (Diatomoceous) और रेडियो-लेरियन ( Radiolarian ) जीवों के शेषांश का स्तर चढ़ा हुआ है। ऐसे भूभाग पर गन्धक उत्पन्न करने वाली गोदन्ती का विस्तृत क्षेत्र है। इस क्षेत्र का चौरस फैलाव ८०० कीलोमीटर ( लगभग ३०० चौरस माइल ) है। इस क्षेत्र की स्थूलता (मोटाई) ३०० फुट के लगभग है; जिसमें मुख्यतः गोदन्ती, चूने के पत्थर, नमक, मृत्तिका, रेणु पाषाण पाये जाते हैं। ऐसे गन्धक पैदा करने वाले क्षेत्र यहां पर तीन चार हैं। वहाँ पर ब्लूइश ग्रे ( Bluish grey भूरे नील वर्ण के ) चूने के पत्थर में गन्धक का प्रसार पाया जाता है। इसके अतिरिक्त सेलेस्टाइट ( Celestite ) भी व्यापारोपयोगी मात्रा में पाया जाता है और उसके साथ साथ गन्धक, गोदन्ती, चूने का पत्थर ( Calcite ) व कभी बेराइट ( Barite ) बहुत ही सुन्दर रवों के रूप में पोली जगहों में जमा पाये जाते हैं। इनके इस प्रकार के जमाव बहुत दर्शनीय रत्नावली के समान रम्य दिखाई पड़ते हैं। सम्भवतः इसी स्थान और दृश्य को देख कर गन्धक के उत्पत्ति प्रकरण में प्राच्य रसायन विज्ञों ने स्थान के वर्णन में लिखा है कि—

श्वेतद्वीपे पुरा देवी सर्व रत्न विभूषिते।
सर्वकाममये रम्ये तीरे क्षीरपयोनिधेः॥ इत्यादि

